आयुर्धा अग्ने ऽस्यायुर्मे धेहीत्यायुरेवास्मिन्दधाति वर्चोधा अग्ने ऽसि वर्चो मे धेहीति वर्च एवास्मिन्दधाति चक्षुष्पा अग्ने ऽसि चक्षुर्मे पाहीति चक्षुरेवास्य पाति श्रोत्रपा अग्ने ऽसि श्रोत्रं मे पाहीति श्रोत्रमेवास्य पाति तनूपा अग्ने ऽसि तन्वं मे पाहीति तन्वमेवास्य पाति यन्मे अग्न ऊनं तन्व्यस्तन्मा आपृणेति यदेवास्यात्मन ऊनं यत्प्रजाया यत्पशूनां तदेवैतेनापूरयति तदाप्याययत्यग्ने यत्ते तपा इत्येता वा अग्नेस्तन्वो ज्योतिष्मतीरेताँद्ध स वा आहारुणं औपवेशिर्योऽन्वसीयसः श्रेयस आत्मनो भ्रातृव्यानभिप्राजानीमाभिष्टानग्नेस्तनूभिर्ज्योतिष्मतीभिः पराभावयामेति परा पाप्मानं भ्रातृव्यं भावयति य एवं विद्वानग्निमुपतिष्ठते ऽग्ने रुचां पते नमस्ते रुचे मयि रुचं धा इति शान्तमेव रुचमात्मन्धत्ते तेजस्वी ब्रह्मवर्चसी भवति चित्रावसो स्वस्ति ते पारमशीयेति रात्रिर्वै चित्रावसुरह्नर्वाग्वसुरर्मिर्वै रात्रिरसा आदित्यो ऽहरेते वै भगे ते ईट्टे चित्राह चित्पत्या हि देवा रोचते ह वा अस्य यज्ञो वा मह्ना वा य एवं वेदाम्भः स्थाम्भो वो भक्षीयेत्यम्भो ३ह्येता महः स्थ महो वो भक्षीयेति महो ३ह्येता ऊर्जः स्थोर्जं वो भक्षीयेत्यूर्जो ३ह्येता रायस्पोषः स्थ रायस्पोषं वो भक्षीयेति रायस्पोषो ३ह्येता रेवती रमध्वमस्मिन्योनावस्मिन्गोष्ठ इति स्व एवैना योनौ स्वे गोष्ठे संवेशयत्ययं वो बन्धुरिती मामपगात बह्वीर्भवत मा मा हासिष्टेत्याशिषमेवाशास्ते वत्समालभते वत्सनिकान्ता हि

1) So M 2; in M 1 wohl ebenso, doch ist auf dem गे der Accent verwischt; H u. Bb भेगे; ebenso B, ohne Accent, Kath 7, 6 भगे वा एते यदहश्चापि रात्र्यसा आदित्यो ऽहरेते एव भगे ईट्टे ईश्वरो cet. (offenbar ॰श्रावी zu lesen.)

सं प्रियेण धाम्नेत्याहुतयो वा अग्नेः प्रियं धामाहुतिभिरेवैनं[1] समर्धयति संमहमायुषा सं वर्चसा सं प्रजया सं रायस्पोषेण ग्मीयेत्याशिषमेवाशास्त इन्धानास्त्वा शतं हिमा इति पृतनाजिह्वाहूतिस्तया[2][3] राज३न्या[4] उपतिष्ठेत यदा हि राज३न्यः पृतनां जयत्यथो[5] भवत्युतो राजन्या उपतिष्ठेत सर्वो हि पृतना जिगीषति सर्वो बुभूषति मनोर्वै दश जाया आसन् दशपुत्रा नवपुत्राष्टपुत्रा सप्तपुत्रा षट्पुत्रा पञ्चपुत्रा चतुष्पुत्रा त्रिपुत्रा द्विपुत्रैकपुत्रा येनवासं स्तानेक उपसंसमक्राम३द्धि ऽष्टौ तान्द्वौ ये सप्त तांस्त्रयो ये षट् तांश्चत्वारो ऽथ वै पञ्चैव पञ्चासंस्ता इमाः पञ्च दशत इमान्पञ्च निरभजन्यदेव किंच मनोः स्वमासीत्तस्मात्ते वै मनुमेवोपाधावन्मना अनाथन्त तेभ्य एताः समिधः प्रायच्छत्ताभिर्वै ते तान्निरदहंस्ताभिरेनान्पराभावयन्परा पाप्मानं भ्रातृव्यं भावयति य एवं विद्वानेताः समिध आदधात्यग्नेः समिदस्यभिशस्त्या मा पाहीत्यभिशस्त्या एनं पाति सोमस्य समिदसि परस्या म एधीति[6] परस्या अस्य भवति यमस्य समिदसि मृत्योर्मा पाहीति मृत्योरेनं पात्येतद्ध स्म वा आह नारद इदं वावाग्न्युपस्थानमासेत्यभिशस्त्या एनं पाति परस्या अस्य भवति मृत्योरेनं पाति ॥ ८ ॥ Vgl 1, 5, 2 — (TS 1, 5, 7), Kâth 7, 6, Kap S 5, 5

---

1) M 2 °माहुतीभिरे°, so auch in M 1 corrigirt, eigentlich hier aber °माहुति° 2) So ist offenbar zu lesen d h पृतनाजित् । हि । आ°, M 1 u 2 lesen पृतनाजिह्वां°, aber der Unterschied von ह्व und ह्व ist ein ganz geringer, starker differiren die andern Mss, B पृतनाजयद्या°, Bb पृतनावयाद्वां°, H °जयाद्वां° 3) So M 1, 2 u B, in H u Bb °हुति° 4) Von hier bis zum folgenden पृतना (excl) in H, Bb fehlend 5) M 1 u 2 °त्यंय 6) M 1 मयेधीती M 2, H, Bb मयेधीति, desgl B, ohne Accent, speciell der Fehler ये für ए wiederholt sich öfters in unsern Mss Wäre dies nicht der Fall, so läge die Correctur in मयेधीति näher

समश्यामि प्रजा अहमिडप्रजसो मानवी॰ ।
सर्वा भवन्तु नो गृहे ॥

इत्यैडीश्च वा इमा प्रजा मानवीश्च ता एवावारुन्द्ध ता आहृता अकुर्तेडा॰ स्थ मधुकृता इतीडा ह्येता मधुकृत॰ स्योना माविशतेरमदा इतीरमदो ह्येता भुवनमसि सहस्रपोषपुषी'ति[1] भुवन॰ ह्येतत्सहस्रपोषपुषि[2] तस्य नो रास्व तस्य ते भक्तिवानो भूयास्मे- त्याशिषमेवाशास्त इडासि व्रतभृदितीडा ह्येषा व्रतभृत्त्वयि व्रतं व्रतभृदसी'ति व्रतभृ ह्येषा ॥ १० ॥

Vgl 1 5 3 — (TS 1 5 8) Kaṭh 7 7 u 8

मंहि त्रीणामवो ऽस्त्विति प्राजापत्येन तृचेनोपतिष्ठते प्राजापत्या वा इमा प्रजास्ता एवावारुन्द्ध ता आहृता अकृतायो प्रजापतिमेवोपैति प्रजापता एव देवतासु प्रतितिष्ठति सोमान॰ स्वरणमि'ति ब्राह्मणस्पत्ययोपतिष्ठते ब्रह्मणि प्रतितिष्ठत्यथो ब्रह्मवर्चसमेवावरुन्द्धे यो वै ब्रह्मणि प्रतिष्ठितेन स्पर्धते पूर्वो ऽस्मात्पद्यत उभयोर्वा अग्निहोत्रिणि देवता आशंसन्ते याभ्यश्च जुहोति याभ्यश्च न मित्रस्य चर्षणीधृता इति मैत्र्योपतिष्ठत उभयत एवैतया मित्रमकृतेतंश्चामुतश्च कदा च न स्तरीरसी'त्यैन्द्रीभ्यां बृहतीभ्यामुपतिष्ठत ऐन्द्रा वै पशवस्तानेवावारुन्द्ध तानाहृतानकुत परि ते दूडभो रथा इत्यसौ वा आदित्यो दूडभो रथ एष वा इमा उभौ लोकौ समीयते सर्वमेवैतया परिगृह्णाति निमृदो ऽसि न्यहं तं मृद्यास॰[3] यो अस्मान्द्वेष्टि यं च वयं द्विष्म इति पाप्मनोऽवगृह्णीयाद्यदि पापीयसा स्पर्धेताभिभूरस्य भ्यहं तं भूयास॰ यो अस्मान्द्वेष्टि यं

---

1) H u Bb सहस्रपोषंपुषीति desgl B ohne Accent. 2) H u Bb सहस्रपोषपुषि desgl B ohne Accent. 3) So M 1 u 2 in H Bb B भूयास॰

पशव एष वै सहस्रपोषस्येशे[1] पुष्यति सहस्रं न सहस्राद्वपद्यते य एवं वेद संहितासि विश्वरूपेति रूपेण रूपेण ह्येषा संहिता[2] रूपैरेवैनां संमर्धयति नामासामग्रहीन्मित्रमाभिरकृतोतं[3][4] हि यदा मित्रस्य नाम गृह्णाति मित्रमेवैनेन कुरुते ॥ ९ ॥

Vgl 1, 5, 2 — TS 1, 5, 7 und 8 (— mantravyakhyānam), Kāṭh 7, 6 u 7, Kap 8 5, 5

सप्त वै बन्धुमतीरिष्टका अग्नौ चित्या उपधीयन्ते ता वै ता अमुष्मा एव लोकाय सप्त ग्राम्या इष्टकास्ता अत्रोपधेया गौश्चाश्वश्चाश्वतरश्च गर्दभो ऽजा चाविश्च पुरुषो[5] यन्नामालभते गवैवं चिता भवन्त्यथो आलब्ध एवोपधीयन्ते पराङ्[6] वा एष छन्दोभिः स्वर्गं लोकमेत्यन्यदन्यच्छन्दः[7] समारोहमुपलायमे दिवं दिवा इति यदेतेन गायत्रेण तृचेनोपतिष्ठत इयं वै गायत्र्यस्यामेव प्रतितिष्ठत्यग्ने त्वं नो अन्तमा इत्येषां वा अग्नेरस्तनूः प्रिया तनूर्वरूथ्या तामेव प्रति नैनमभिदासन्नस्तृणुते[8] चतसृभिर्द्विपदाभिरुपतिष्ठते चतुष्पादो वै पशवो द्विपाद्यजमानो गृहा गार्हपत्यो गृहेषु चैवं पशुषु च प्रतितिष्ठत्यूर्जा वः पश्याम्यूर्जा मा पश्यतेत्यूर्जैनाः पश्यत्यूर्जैनं पश्यन्ति रय्या वः पश्यामि रय्या मा पश्यतेति रय्यैनाः पश्यति रय्यैनं पश्यन्ति ॥

---

1) Die Hdschr schwanken, M 2 सहस्रपोषस्येशे, M 1 सहस्रपोषस्येशे, H सहस्रपोषस्येशे, Bb सहस्रपोषस्येशे, vgl auch 1, 5, 3 a E 2) So betonen die Mss, während sie alle eine Zeile vorher संहिता als Oxytonon bieten, ebenso oben 1, 5, 2 a. E und TS Das zweite Mal scheint hier die participiale Bedeutung betont zu sein, daher vielleicht die Divergenz, welche kaum auf Zufall beruhen dürfte 3) M 1 °माभिर° 4) So M 2, in M 1 °रकृतोतं हि, H u Bb °रकृतोतहि (ohne Accent.) 5) So M 1 u 2, in H, Bb पूरुषो 6) So M 1, dagegen M 2, H, Bb u B परा° 7) Die Mss °न्यदन्यच्छंद 8) M 1 °मभिदासत्स्तृ°, M 2 °मभिदासन् स्तृ°, H, Bb u B °मभिदास स्तृ°

र्च्छति वा एष देवान्य एनान्सदर्दि[1] याचतीति तस्मात्तर्हि नोपस्थेयो यमो वा अम्रियत ते देवा यम्यां यममपाब्रुवंस्तां[2] यदपृच्छन्त्साब्रवीदद्यामृतेति[3] ते ऽब्रुवन्न वा इयमिममित्थं मृष्यते रात्रीं[4] सृजावहा[5] इत्यहर्वाव तर्ह्यासीन्न रात्रिस्ते देवा रात्रिमसृजन्त[6] ततः श्वस्तनमभवत्ततः सा तममृष्यत तस्मादाहुरहोरात्राणि वाव यमं मर्षयन्तीति सा वै रात्रिः सृष्टा पशूनभिसममिलन्[7] देवाश्छन्दोभिरेव पशूनन्वपश्यंश्छन्दोभिरेनान्पुनरुपाह्वयन्त यदुपतिष्ठते छन्दोभिर्वा एतत्पशूननुपश्यति[8] छन्दोभिरेनान्पुनरुपह्वयते[9] ऽथो आहुर्वरुणो वै स तंद्राचिर्भूत्वा पशूनग्रसतेति ते देवाश्छन्दोभिरेव वरुणात्पशूनमुञ्चंश्छन्दोभिरेनान्पुनरुपाह्वयन्त यदुपतिष्ठते छन्दोभिर्वा एतद्वरुणात्पशून्प्रमुञ्चति[10] छन्दोभिरेनान्पुनरुपह्वयते यज्ञो यज्ञो वै संमृच्छते ऽथाकस्यविदो[11] मन्यन्ते सोम एव संमृच्छत इत्यग्नीषोमीयायाः पुरस्ताद्विहव्यस्य चतस्र ऋचो वदेदाग्नेयस्य पुरोडाशस्य द्वे याज्यानुवाक्ये[12] कुर्यात्तेनैव हवींष्यासन्नान्यभिमृशेद्वृङ्क्ते ऽन्यस्य यज्ञं नास्यान्यो यज्ञं वृङ्क्ते सयज्ञो[13] भवत्ययज्ञा इतर ॥ १२ ॥ Vgl (TS 1 5 9) Kath 7 10, Kap S 5 6

1) So M 1 M 2 यथेनात्सदर्दी B य एनान्त्सदर्दि in H u Bb fehlt य sonst wie M 1 2) So M 1 u 2 während H Bb u B तान्यदापृच्छत् wo also die Götter die Befragten sind aber zu M 1 u 2 stimmt auch Kath 7 10 ता यदपृच्छन्यमि कर्हि ते भ्रातामृतेत्यद्यैवेत्यब्रवीत् ebenso sind Frage und Antwort Kap S 5 6 3) So M 1 in M 2 यदपृच्छत् für H Bb u B s vor Anm 4) Man beachte die feine Distinction dass die Götter die volle Form रात्री brauchen während der Erzähler रात्रि sagt 5) Nur in M 1 ist das Verbum unbetont 6) Nur M 2 रात्रीम° diese Handschrift hat noch dazu eine besondere Vorliebe für statt ı 7) So M 1, die andern Mss संममीलत् 8) So M 1 die andern Mss नुपश्यति 9) So M 1, in M 2 °रूपाह्वयत (doch vielleicht die Länge des â del H Bb u B °रुपाह्वयते 10) So M 1 Bb die andern Mss प्रमुचति 11) So die Mss es liegt also ein eigenthümlich gebildetes Nomen अकस्यविद् vor etwa „nichts Rechtes wissend" 12) So M 2 in M 1 याज्यानुवाक्ये H Bb याज्यानुवाक्ये 13) So corrigirt M 1 स यज्ञो M 2 H Bb स यज्ञो

च वयं द्विष्म इति दक्षिणतः पदो ऽवगृह्णीयाद्यदि सदृशेन स्पर्धेत प्रभूरसि प्राहं तमतिभूयासं यो अस्मान्द्वेष्टि यं च वयं द्विष्म इति प्रपदेनावगृह्णीयाद्यदि श्रेयसा स्पर्धेत सर्वानेवैनानभिभवति सर्वानतिभवति सर्वानतिक्रामति पूषा मा पथिपाः पात्वितीयमेव पूषा मा पशुपाः पात्वित्यन्तरिक्षमेव पूषा माधिपाः पात्वित्यसा एवेमानेव लोकानुपासरदेभ्यो लोकेभ्य आत्मानं परिधत्ते ऽहिंसायै प्राची दिगग्निर्देवतेति तनूपानामेव दिक्षु निधत्ते ऽथ येन स्पर्धेत येन वा व्यभिचरते स एता एव देवता ज्ञात्वा पूर्वः पराभवति सप्त वै पुरुषे महिमानस्ते वा एनेनैड्यास्ते वै ते सप्तऋषय एव प्राणा वै सप्तऋषयः प्राणान्वा एतदीट्टा ईट्टे ह वै स्वान्प्राणान्वृङ्क्ते भ्रातृव्यस्य प्राणान्नैनमभिदासन्स्तृणुते य एवं वेद धर्मो मा धर्मणः पातु विधर्मो मा विधर्मणः पात्वायुश्च प्रायुश्च चक्षुश्च विचक्षुश्च प्राङ् चापाङ् चोरुक इत्ययं वा उरुक एष विभजति तद्वदे[illegible]ति तदेतस्मिन्नेव पुनराभजत्ययमे गृहपते ऽग्निं समिन्धे यजमा[illegible] एतद्वै यजमानस्य स्वं यदग्निरेतदस्य यद्यजमान आयतनमिव वा एतत्क्रियते ज्योतिषे तन्तवे त्वेत्यन्तरामी उपविश्य वदेद्यामेव पुर आशिषमाशास्ते यां पश्चात्तामात्मन्धत्ते ॥ ११ ॥

Vgl 1, 5, 4 — TS 1, 5, 8; Kāth 7, 9.

ददन्मा इति वै दीयते सदर्दि वा एष ददाति यो ऽग्निहोत्रं जुहोति यद्यत्कामयेत तत्तदग्निहोऽउत्ध्यग्निं याचेदुप हैनं तन्नमति तदाहु-

1) So die Mss, auch Kāth 7, 9 एता एव स देवता ज्ञात्वा पराभवति 2) M 1 पूरुषे 3) H, Bb B °भिदास स्तृ°, s oben 4) M 1 धर्मणा 5) So M 1 u 2, H, Bb, B चक्षुश्च 6) So M 1 u 2, H, Bb वि चक्षुश्च, desgl B, ohne Accent. 7) M 1 पुनर° ohne Accent 8) M 2 सद्दी 9) So M 1 u. 2, aber H, Bb u. B °दुपाहैन

ऋछति वा एष देवान्य एनान्त्सदृदि[1] याचतीति तस्मात्तर्हि नोपस्थेयो यमो वा अम्रियत ते देवा यम्या यममपाब्रुवंस्तां[2] यदपृछन्त्साब्रवीदद्यामृतेति[3] ते ऽब्रुवन्न वा इयमिममित्थं मृष्यते रात्रीं[4] सृजावहा इत्यहर्वाव तर्ह्यासीन्न[5] रात्रिस्ते देवा रात्रिमसृजन्त[6] ततः श्वस्तनमभवत्ततः सा तममृष्यत तस्मादाहुरहोरात्राणि वावाघं मर्षयन्तीति सा वै रात्रिः सृष्टा पशूनभिसममिलंस्ते[7] देवाश्छन्दोभिरेव पशूनन्वपश्यंश्छन्दोभिरेनान्पुनरुपाह्वयन्त यदुपतिष्ठते छन्दोभिर्वा एतत्पशूननुपश्यति[8] छन्दोभिरेनान्पुनरुपह्वयते[9] ऽथो आहुर्वरुणो वै स तद्रात्रिर्भूत्वा पशूनप्रसतेति ते देवाश्छन्दोभिरेव वरुणात्पशूनमुञ्चंश्छन्दोभिरेनान्पुनरुपाह्वयन्त यदुपतिष्ठते छन्दोभिर्वा एतद्वरुणात्पशून्प्रमुञ्चति[10] छन्दोभिरेनान्पुनरुपह्वयते यज्ञो यज्ञो वै संमृछते ऽथाकस्यविदो[11] मन्यन्ते सोम एव संमृछत इत्यग्नीषोमीयायाः पुरस्ताद्धविषश्च तस्रा ऋचो वदेदाग्नेयस्य पुरोडाशस्य द्वे याज्यानुवाक्ये[12] कुर्यादेतेनैव हवींष्यासन्नान्यभिमृशेद्वृ३ङ्क्ते ऽन्यस्य यज्ञं नास्यान्यो यज्ञं वृङ्क्ते संयज्ञो[13] भवत्ययज्ञा इतरः ॥ १२ ॥ Vgl (TS 1,5,9) Kath 7,10, Kap S 5,6

1) So M 1, M 2 यथेनात्सदृदी B य एतान्त्सदृदि, in H u Bb fehlt य sonst wie M 1 2) So M 1 u 2, während H Bb u B तान्यदापृछत्, wo also die Götter die Befragten sind aber zu M 1 u 2 stimmt auch Kath 7, 10 ता यदपृछन्यमि कर्हि ते भ्रातामृतेत्यद्येत्येवाब्रवीत्, ebenso sind Frage und Antwort Kap S 5 6 3) So M 1, in M 2 यदपृछत्, für H, Bb u B s vor Anm 4) Man beachte die feine Distinction, dass die Götter die volle Form रात्री brauchen, während der Erzähler रात्रि sagt. 5) Nur in M 1 ist das Verbum unbetont 6) Nur M 2 रात्रीम॰, diese Handschrift hat noch dazu eine besondere Vorliebe für ī statt i 7) So M 1, die andern Mss संममीलत् 8) So M 1 die andern Mss अनुपश्यति 9) So M 1, in M 2 ॰रूपाह्वयते (doch vielleicht die Länge des a del , H, Bb u B ॰रुपाह्वयते 10) So M 1 Bb die andern Mss प्रमुपति 11) So die Mss; es liegt also ein eigenthümlich gebildetes Nomen अकस्यविद् vor, etwa „nichts Rechtes wissend“ 12) So M 2 in M 1 याज्यानुवाक्ये H Bb याज्यानुवाक्ये 13) So corrigirt, M 1 स यज्ञो, M 2, H Bb स यज्ञो

अग्निं वा एते चित्यं चिन्वते य आहिताग्नयो दर्शपूर्णमासिनस्तेषां वा अहोरात्राण्येवेष्टका उपधीयन्ते यत्पञ्च रात्रीः संहिता वसेत्तं जुहुयात्पञ्च रात्रयः पञ्चाहानि सा दशत्संपद्यते तन्नैवं कर्तवा अयतं तद्दंशस्येव रात्रिष्वन्तमं होत३व्यं तथा यतं क्रियते न सर्वेषु युक्तेषु होत३व्यं वास्तौ जुहुयान्नायुक्तेष्वयतं क्रियते सर्वाण्यन्यानि युक्तानि स्युरपिष्वस्य दक्षिणो युक्तः स्यात्सव्यस्य योक्त्रं परिहृतमथ जुहुयाद्वै वास्तौ जुहोति यत्तमुत्क्रियते तन्न सूक्ष्य सर्वेष्वेव युक्तेषु होतव्यं वास्तोष्पत्य३ इत्येतन्न हीनमन्वाहर्तवै रुद्राय हि तद्धीयते यद्धीनमन्वाहरेयू रुद्रं भूतमन्वाहरेयुर्यद्यनुवाहः स्यात्पूर्वं त प्रवहेयुरप वोद्धरेयुर्यद्धीयेत हीयेतैव तदथ जुहुयात् ॥

अमीवहा वास्तोष्पते विश्वा रूपाण्याविशन् ।
सखा सुशेव एधि नः ॥
वास्तोष्पते प्रति जानीह्यस्मान्स्वावेशो अनमीवो भवा नः ।
यत्त्वेमहे प्रति तन्नो जुषस्व शं नो भव द्विपदे शं चतुष्पदे ॥

॥ १३ ॥ Vgl TS 3, 4, 10 (prayâṇam karishyato 'gnihotriṇo 'gnisamāropaṇam vastoshpatiyuto homah), Mân Çr 1, 6, 3

यम्मून्मे शंस्य पाहि तान्मे गोपायास्माकं पुनरागमात् [10] ॥ अग्ने सहस्राक्ष शतमूर्धञ्छतं [11] ते प्राणाः सहस्रमपानास्त्वं [12] साहस्रस्य राय ईशिषे तस्मै ते विधेम वाजाय ॥ प्रजा मे नर्य पाहि तां मे गोपा-

1) So M 1, in M 2 चित्य, H, Bb u B चिति 2) So M 2, die andern Mss bloss दर्श स° 3) So M 1, die andern Mss रात्रीष्व° 4) Die Mss °मुत्क्रियते ohne Accent. 5) So M 1 u 2 H Bb होत३व्य° वास्तोष्पत्य°, auch in B die ३ 6) Die Mss °नुवाहं 7) So M 2, in den andern d Verb ohne Accent 8) P यत् । त्वा । ईमहे । 9) P गोपाय । वा । अस्माक । 10) P पुन । आगमादित्या गमात् । 11) P शतमूर्धन्निति शत मूर्धन् । 12) So H Bb B M 1 u 2 trennen °नाः । त्वं°, aber vgl weiter unten, P अप आना । 13) P रायं ।

यास्माकं पुनरागमादिमे गृहपते सुगृहपतिरहं त्वया गृहपतिना भूयास्ं सुगृहपतिस्त्वं मया गृहपतिना भूया अन्नं मे बुध्य पाहि तन्मे गोपायास्माकं पुनरागमात् ॥

इमान्मे मित्रावरुणौ गृहान्गोपायतं युवम् ।
अविनष्टानविहृतान्पूषैनानभिरक्षत्वास्माकं पुनरागमात् ॥

पशून्मे शंस्य पाहि तान्मे गोपायास्माकं पुनरागमादित्याहवनीयमुपतिष्ठत आहवनीयायैवं पशून्परिदाय प्रैत्यग्ने सहस्राक्ष शतमूर्धन्निति सहस्राक्षो ह्येष शतमूर्धा शतं ते प्राणाः सहस्रमपाना इति शतं ह्येतस्य प्राणाः सहस्रमपानास्त्वं साहस्रस्य राय ईशिषे तस्मै ते विधेम वाजायेत्याशिषमेवाशास्ते ॥ प्रजां मे नर्य पाहि तां मे गोपायास्माकं पुनरागमादिति गार्हपत्यमुपतिष्ठते गार्हपत्यायैवं प्रजां परिदाय प्रैत्यग्ने गृहपते सुगृहपतिरहं त्वया गृहपतिना भूयास्ं सुगृहपतिस्त्वं मया गृहपतिना भूया इत्यपहणौ संजीयतः सर्वमायुरितो नार्तिं ह्यनीतो ऽन्नं मे बुध्य पाहि तन्मे गोपायास्माकं पुनरागमादिति दक्षिणाग्निमुपतिष्ठते दक्षिणाग्नय एवान्नं परिदाय प्रैति ॥

इमान्मे मित्रावरुणौ गृहान्गोपायतं युवम् ।
अविनष्टानविहृतान्पूषैनानभिरक्षत्वास्माकं पुनरागमात् ॥

इत्यहोरात्रे वै मित्रावरुणौ पशवः पूषाहोरात्राभ्यां चैवं मित्रावरुणाभ्यां च गृहान्परिदाय प्रैति ॥ अग्निं समाधेहि ॥ इत्याह भस्म

---

1) P गोपाय । स्मा । अस्माकं । 2) P पुन । आगमात् । 3) M I सुग्र 4) P पूषा । एनान् । 5) P स्मा । अस्माक । 6) So schreibe ich und zerlege सं । आर्तिं । हि । इत । P fehlt hierfür, M I H Bb नार्तिंह्यनीतो, desgl B, ohne Accent, M 2 नार्तिंह्यनीतो, vgl Kaṭh 7, 11 अग्ने गृहपत इति नार्तिमार्छतो ऽस्यित्र यजमानस्य न भेषजीतो ऽस्मिन् प॰, auch Kap 5, 6 । नार्तिमार्छतो 7) M I सुग्र

त्वा[1] उपतिष्ठते ॥ पशून्मे शं॰स्याजुगुपस्तान्मे[2] पुनर्देहि ॥ इत्याहवनीयं पुनरेत्योपतिष्ठत आहवनीयेनैव पशून्गुप्तानात्मन्धत्ते ॥ अग्ने सहस्राक्ष शतमूर्धञ्छतं ते प्राणाः सहस्रमपानास्त्वं[3] साहस्रस्य राय ईशिषे तस्मै ते विधेम वाजाय ॥ प्रजां मे नर्याजुगुपस्तां[4] मे पुनर्देहि ॥ इति गार्हपत्यं पुनरेत्योपतिष्ठते गार्हपत्येनैव प्रजां गुप्तामात्मन्धत्ते ॥ अग्ने गृहपते सुगृहपतिरहं त्वया गृहपतिना भूयासं[5] सुगृहपतिस्त्वं मया गृहपतिना भूया अन्नं मे बुध्याजुगुपस्तन्मे[6] पुनर्देहि ॥ इति दक्षिणाग्निं पुनरेत्योपतिष्ठते दक्षिणाग्निनैवान्नं गुप्तमात्मन्धत्ते ॥

इमान्मे मित्रावरुणौ गृहाञ्जुगुपतं युवम् ।
अविनष्टानविह्रुतान्पूषैनानभ्यरक्षीदा साकं पुनरागमात् ॥

इत्यहोरात्रे वै मित्रावरुणौ पशवः पूषाहोरात्राभ्यां चैव मित्रावरुणाभ्यां च गृहान्गुप्तानात्मन्धत्ते ॥ १४ ॥

Vgl Kāth 7, 3 u 11, Kap S 6, 1, Man Çr 1, 6, 3

॥ इति प्रथमकाण्डे अग्न्युपस्थानः पञ्चमः प्रपाठकः[8] ॥

---

प्र वो वाजा अभिद्यवो हविष्मन्तो घृताच्या ।
देवाञ्जिगाति[9] सुम्नयुः ॥

---

1) So die Mss, P भेष्व । त्वा । (müsste wohl त्व । lauten) 2) P श॰स्य । अजुगुप । 3) M 1 ॰पाना । स्वं॰, M 2 ohne den ।, sonst ebenso 4) P नर्य । अजुगुप । 5) Bb schiebt hier noch ein सुगृहपते ein 6) P बुध्य । अजुगुप ।, M 1 बुध्या॰ 7) P अभि । अरक्षत् । 8) So die Unterschrift in H, Bb u B, dagegen in M 1 u 2 bloss ॥ उपस्थान पंचम प्रपाठक ॥ 9) P eigentlich जिगातु, aber dann corrigirt, doch undeutlich, in B findet sich die erste Hälfte dieses Cap doppelt, das zuerst geschriebene, dann eingeklammerte Stück enthält an dieser

उप त्वा जुह्वो मम घृताचीर्यन्तु हर्यत ।
अग्ने हव्या जुषस्व नः ॥
उदग्ने तव तद् घृतादर्ची रोचत[1] आहुतम् ।
निंसानं जुह्वो[2] मुखे ॥
प्रजा अग्ने संवासयेहाशाश्च[3] पशुभिः सह ।
राष्ट्राण्यस्मिन्धेहि यान्यासन्त्सवितुः सवे ॥
अयं ते योनिरृत्वियो यतो जातो अरोचथाः ।
तं जानन्नग्न आरोह ततो नो वर्धया रयिम् ॥
आयं[4] गौः पृश्निरक्रमीदसदन्मातरं पुरः ।
पितरं च प्रयन्त्स्वः[5] ॥
त्रिंशद्धामा[6] विराजति[7] वाक्पतंगाय हूयते ।
व्युख्यन्महियो[8] दिवम् ॥
अन्तश्चरत्यर्णवे अस्य प्राणादपानतः[9] ।
प्रति वा सूरो[10] अहभिः ॥
इतो जज्ञे प्रथमं स्वाद्योनेरधि जातवेदाः ।
स[11] गायत्र्या त्रिष्टुभा जगत्यानुष्टुभा च देवेभ्यो हव्यं वहतु
प्रजानन् ॥
यो नो अग्निः पितरो हृत्स्वन्तरमर्त्यो[12] मर्त्यं[13] आविवेश ।

---

1) P अर्चि । रोचते । 2) P जुह्व । 3) P इह । आशा । 4) P आ । अयं । 5) Die Mss प्रयन्त्स 6) So die Mss (im Gegensatz zu RV 10, 189, 3), P त्रिंशद्धामेति त्रिंशत् । धामा । 7) So M 1 u 2 P वि । राजति ।, H, Bb u B विराजती 8) So ist zu schreiben, vgl Vorr über ख्या, ख्य, M 2 व्युचन्, M 1 ursprünglich ebenso, aber corrigirt in व्युख्यन्, H Bb u B व्युच्यान् P वि । अख्यत् ।, Kath. व्यख्यन्, so Kap S 6 4 9) अपानत इत्यप अनते । 10) So M 2, M 1 urspr सुरो, dann corrigirt, aber undeutlich, P सूरः ।, H Bb u B भूरो । 11) P सः ।, B स, 12) P हृत्सु । अन्तः । 13) P मर्त्यान् ।

तमात्मनि परिगृह्णीमसीह नेदेषो अस्माननवहाय परायत्[1]॥
दोह्या च ते दुग्धभृच्चोर्वरी ते ते भागधेयं प्रयच्छामि ताभ्यां त्वादधे[2] घर्मः शिरस्तदयमग्निः संप्रियः पशुभिर्भव पुरीषमसि यत्ते शुक्र शुक्रं ज्योतिस्तेन रुचा रुचमशीधाः ॥

मयि गृह्णाम्यहमग्रे अग्निं सह प्रजया वर्चसा धनेन ।
मयि क्षत्रं मयि रायो दधामि मदेम शतहिमाः[3] सुवीराः ॥

भूर्भुवो ऽङ्गिरसां त्वा देवानां व्रतेनादधे ऽग्नेष्ट्वा[4] देवस्य व्रतेनादधा[5] इन्द्रस्य त्वा मरुत्वतो व्रतेनादधे मनोष्ट्वा[6] ग्रामण्यो व्रतेनादधे ॥

आछदि त्वा छन्दो दधे द्यौर्महासि भूमिर्भूना ।
तस्यास्ते देव्यदित उपस्थे ऽन्नादमग्निमन्नपत्यायादधे[7] ॥
अग्न आयूंषि पवसे ऽग्निर्ऋषिः पवमानः पवस्व ॥ १ ॥

Vgl TS 1 5 3 (ādhānamantrāḥ) 5 7 9 (agnigrahaṇād kam) Kāṭh 7 1[2] 13 Kap S 6 2 4 7, 2 TBr 1 2 1 13 16, 1 1 7 1 1 1 4 8 Mān Çr 1 5 1—3

या वाजिन्नग्ने पवमाना प्रिया तनूस्तामावह या वाजिन्नग्ने पावका प्रिया तनूस्तामावह या वाजिन्नग्ने शुचिः प्रिया तनूस्तामावह ॥

यदक्रन्दः प्रथमं जायमान[8] उद्यन्समुद्रादुत वा पुरीषात् ।
श्येनस्य ते पक्षा हरिणस्य बाहू उपस्तुत्यं जनिम तत्ते अर्वन् ॥
ओजसे बलाय त्वोद्यच्छे वृष्णे शुष्माय सपत्नतूरसि वृत्रतूः ॥
प्राचीमनु प्रदिशं प्रेहि विद्वानग्नेरग्ने[9] पुरो अग्निर्भवेह[10] ।
विश्वा[11] आशा दीद्यद्विभाह्यूर्जं[12] नो धेहि द्विपदे चतुष्पदे ॥

1) So M 1 u 2 H desgl B ohne Accent in Bb परा यत । P fehlerhaft पार्श्व । यत् । Kap S 6 2 परा गात् (s TS 5 7 9 1) 2) P त्वा । आ । दधे । 3) P शत । हिमाः । 4) P अग्नेः । त्वा । 5) P आ । दधे । 6) P मनोः । त्वा । 7) P अन्नादमित्यन्न आदं । 8) P जायमानः । 9) P अग्ने । अग्ने । 10) P पुरः । अग्निरिति पुरः अग्निः । 11) P विश्वाः । 12) P दीद्यत् । विभाहि ।

अभ्यस्थां[1] विश्वाः पृतना अरातीस्तदग्निराह[2] तदु सोम आह ।
बृहस्पतिः सविर्तेन्द्रस्तदाह पूषा मा आधात्सुकृतस्य[3] लोके ॥

भुवः उस्वरङ्गिरसां त्वा देवानां व्रतेनादधे ऽग्नेष्ट्वा देवस्य व्रतेनादधा इन्द्रस्य त्वा मरुत्वतो व्रतेनादधे मनोष्ट्वा ग्रामण्यो व्रतेनादधे ॥

आछंदि त्वा छन्दो दधे द्यौरिवहासि भूमिर्भूना ।
तस्यास्ते देव्यदित उपस्थे ऽन्नादमग्निमन्नपत्यायादधे ॥

यत्ते शुक्र शुक्रं ज्योतिः शुक्रं धामाजस्रं तेन त्वादधे[4] ॥

इडायास्त्वा पदे वयं नाभा पृथिव्या अधि ।
जातवेदो निधीमह्यग्ने हव्याय वोढवे ॥

सम्राट् च स्वराट् चाग्ने ये ते तउन्वौ ताभ्यां मा[5] ऊर्जं यच्छ[6] विराट् च प्रभूश्चाग्ने[7] ये ते तउन्वौ ताभ्यां मा ऊर्जं यच्छ विभूश्च परिभूश्चाग्ने ये ते तउन्वौ ताभ्यां मा ऊर्जं यच्छ ॥

समुद्रादूर्मिर्मधुमां[8,9] उदारदुपांशुना[10,11] सममृतत्वमानट् ।
घृतस्य नाम गुह्यं यदस्ति जिह्वा देवानाममृतस्य नाभिः ॥
वयं नाम प्रब्रवामा[12] घृतस्यास्मिन्यज्ञे धारयामा[13] नमोभिः ।
उप ब्रह्मा[14] शृणवच्छस्यमानं[15] चतुःशृङ्गो ऽवमीद्गौर[16] एतत् ॥
चत्वारि शृङ्गा त्रयो अस्य पादा[17] द्वे शीर्षे सप्त हस्तासो अस्य ।
त्रेधा बद्धो वृषभो रोरवीति[18] महो देवो मर्त्यां[19] आविवेश ॥

1) P अभि । अस्था । 2) Bb आरातीस् 3) H, Bb अधात् 4) P त्वा । ऽधा । दधे । 5) P मे । 6) M 2 गच्छ 7) So M 1 u 2, Bb, desgl B, ohne Accent, der P प्रभूरिति प्र भूः ।, H प्रभुश्चाग्ने 8) P समुद्रात् । ऊर्मिः । 9) P मधुमानिति मधु मान् । 10) B उत् । आरत् । 11) So betonen M 1 u 2 (vgl RV 4, 58, 1), P उप । अंशुना ।, dagegen H u Bb °दुपाऽशुना 12) So M 1 u 2 (s RV 4, 58, 1), P प्र । ब्रवाम ।, B प्र ब्रुवाम Bb ब्रुवाम 13) So M 2, H, Bb, P धारयाम ।, M 1 धारयामा 14) B ब्रह्म 15) So M 1 u M Paddh III S 7a, P शृणवत् (vgl RV 4, 58 2) aber M 2 शृणवै श°, B शृणुषे, H u Bb शृणुणवे, Kāth 7, 13 शृणुवच्छस्यमान 16) P गौरः । 17) P पादाः । 18) M 2 रौरवीति 19) P मर्त्यान् ।

तमात्मनि परिगृह्णीमसीह नेदेषो अस्माननवहाय परायत्[1] ॥ दोह्या च ते दुग्धभृच्चोर्वरी तौ ते भागधेयं प्रयच्छामि ताभ्यां त्वादधे[2] घर्मः शिरस्तदयमग्निः संप्रियः पशुभिर्भव पुरीषमसि यत्ते शुक्र शुक्रं ज्योतिस्तेन रुचा रुचमशीथाः ॥

मयि गृह्णाम्यहमग्रे अग्निं सह प्रजया वर्चसा धनेन ।
मयि क्षत्रं मयि रायो दधामि मदेम शतहिमाः[3] सुवीराः ॥

भूर्भुवो ऽङ्गिरसां त्वा देवानां[4] व्रतेनादधे ऽग्नेष्ट्वा[5] देवस्य व्रतेनादधा इन्द्रस्य त्वा मरुत्वतो व्रतेनादधे मनोष्ट्वा[6] ग्रामण्यो व्रतेनादधे ॥

आछदि त्वा छन्दो दधे द्यौर्महासि भूमिर्भूना ।
तस्यास्ते देव्यदित उपस्थे ऽन्नादमग्निमन्नपत्यायादधे[7] ॥

अग्ना आयूंषि पवसे ऽग्निर्ऋषिः पवमानः पवस्व ॥ १ ॥

Vgl TS 1, 5, 3 (âdhânamantrâh), 5, 7, 9 (agnigrahaṇâdikam), Kâṭh 7, 12 13, Kap S 6, 2 4, 7, 2; TBr 1, 2, 1, 13 16, 1, 1, 7, 1, 1, 1, 4, 8, Mân. Çr 1, 5, 1—3

या वाजिन्नग्नेः पवमाना प्रिया तनूस्तामावह या वाजिन्नग्नेः पावका प्रिया तनूस्तामावह या वाजिन्नग्नेः शुचिः प्रिया तनूस्तामावह ॥

यदक्रन्दः प्रथमं जायमान[8] उद्यन्त्समुद्रादुत वा पुरीषात् ।
श्येना ते पक्षा हरिणोत बाहू उपस्तुत्यं जनिम तत्ते अर्वन्[9] ॥

ओजसे बलाय त्वोद्यच्छे वृष्णे शुष्माय सपत्नतूरसि वृत्रतूः ॥

प्राचीमनु प्रदिशं प्रेहि विद्वानग्नेरग्ने पुरो अग्निर्भवेह[10] ।
विश्वा[11] आशा दीद्यद्विभाह्यूर्जं[12] नो धेहि द्विपदे चतुष्पदे ॥

---

1) So M 1 u 2, H, desgl B, ohne Accent, in Bb परा यत् ।, P fehlerhaft पार । यत् ।, Kap S 6, 2 परा गात् (s TS 5 7, 9, 1) 2) P त्वा । आ । दधे । 3) P शत । हिमा । 4) P वर्चे । त्वा । 5) P आ । दधे । 6) P मनो । त्वा । 7) P अन्नादमित्यन्न आदे । 8) P जायमान । 9) P अर्वैः । अर्वे । 10) P पुरो । अग्निरिति पुरः अपि । 11) P विश्वाः । 12) P दीदत् । विभाहि ।

अभ्यस्थाऽ[1] विश्वाः पृतना अरातीस्तदग्निराह[2] तदु सोम आह ।
बृहस्पतिः सवितेन्द्रस्तदाह पूषा मा आधात्सुकृतस्य[3] लोके ॥
भुवः उस्त्वाङ्गिरसां त्वा देवानाऽ व्रतेनादधे ऽग्नेष्ट्वा देवस्य व्रतेनादधा
इन्द्रस्य त्वा मरुत्वतो व्रतेनादधे मनोष्ट्वा यामण्यो व्रतेनादधे ॥
आछदि त्वा छन्दो दधे द्यौर्महासि भूमिर्भूना ।
तस्यास्ते देव्यदित उपस्थे ऽन्नादमग्निमन्नपत्यायादधे ॥
यत्ते शुक्र शुक्रं ज्योतिः शुक्रं धामाजस्रं तेन त्वादधे[4] ॥
इडायास्त्वा पदे वयं नाभा पृथिव्या अधि ।
जातवेदो निधीमह्यग्ने हव्याय वोढवे ॥
सम्राट् च स्वराट् चाग्ने ये ते तनुवौ ताभ्यां मा[5] ऊर्जऽ यछ[6] विराट् च
प्रभूश्चाग्ने[7] ये ते तनुवौ ताभ्यां मा ऊर्जऽ यछ विभूश्च परिभूश्चाग्ने
ये ते तनुवौ ताभ्यां मा ऊर्जऽ यछ ॥
समुद्रादूर्मिर्मधुमां[8][9] उदारदुपाऽंशुना[10][11] सममृतत्वमानट् ।
घृतस्य नाम गुह्यऽ यदस्ति जिह्वा देवानाममृतस्य नाभिः ॥
वयं नाम प्रब्रवामा[12] घृतस्यास्मिन्यज्ञे धारयामा[13] नमोभिः ।
उप ब्रह्मा[14] शृणवच्छस्यमानं[15] चतुःशृङ्गो ऽवमीद्गौर[16] एतत् ॥
चत्वारि शृङ्गा त्रयो अस्य पादा[17] द्वे शीर्षे सप्त हस्तासो अस्य ।
त्रेधा बद्धो वृषभो रोरवीति[18] महो देवो मर्त्याँ[19] आ ततान ॥

1) P अभि । अस्था । 2) Bb आरातीस् 3) H Bb अधात् 4) P त्वा । र्था । दधे । 5) P मे । 6) M 2 गछ 7) So M 1 u 2, Bb, desgl B, ohne Accent, der P प्रभुरिति प्र भूं ।, H प्रभुश्चाग्ने 8) P समुद्रात् । ऊर्मिं । 9) P मधुमानिति मधु मान् । 10) B उत् । आरत् । 11) So betonen M 1 u 2 (vgl RV 4, 58, 1), P उप । अंशुना ।, dagegen H u Bb °दुपाऽंशुना 12) So M 1 u 2 (s RV 4, 58, 1), P प्र । ब्रवाम ।, B प्र ब्रुवाम, Bb ब्रुवाम 13) So M 2, H, Bb, P धारयाम ।, M 1 धारयामा 14) B ब्रह्म 15) So M 1 u M Paddh III S 7a, P शृणवत् (vgl RV 4 58, 2) aber M 2 शृणवै श° B शृणुवे, H u. Bb शृणुवे, Kāṭh 7, 13 शृणुयच्छस्यमान 16) P गौरं । 17) P पादा । 18) M 2 रोरवीति 19) P मर्त्यान् ।

ये अग्नयः संमनसा[1] ओषधीषु वनस्पतिषु प्रविष्टाः ।
ते विराजमभिसंयन्तु सर्वा[2] ऊर्जं नो धेहि[3] द्विपदे चतुष्पदे ॥
सप्त ते अग्ने समिधः सप्त जिह्वाः सप्त ऋषयः सप्त धाम प्रियाणि ।
सप्त ऋत्विजः सप्तधा त्वा यजन्ति सप्त होत्रा ऋतुथा नु विद्वान्त्सप्त योनीरापृणस्व[4] घृतेन स्वाहा ॥
ये अग्नयो दिवो ये पृथिव्याः समागच्छन्तीषमूर्जं वसानाः ।
ते अस्मा अग्नये[5] द्रविणं दत्त्वेष्टाः[6] प्रीता आहुतिभाजो[7] भूत्वा यथालोकं पुनरस्तं[8] परेत[9] स्वाहा ॥
निषसाद धृतव्रतो वरुणः पस्त्यास्वा ।
साम्राज्याय सुक्रतुः ॥
उत नोऽहिर्बुध्न्यः शृणोत्वज एकपात्पृथिवी समुद्रः[10] ।
स्तुता मन्त्राः[11] कविशस्ता[12] अवन्तु न[13] एना[14] राजन्हविषा मादयस्व ॥
प्र नूनं ब्रह्मणस्पतिर्मन्त्रं वदत्युक्थ्यम् ।
यस्मिन्निन्द्रो वरुणो मित्रो अर्यमा देवा ओकांसि चक्रिरे ॥
घर्मः शिरस्तदयमग्निः संप्रियः पशुभिर्भव[15] पुरीषमसि यच्छा[16] तोकाय तनयाय शं[17] योरर्को ज्योतिस्तदयमग्निः[18] संप्रियः पशुभिर्भव

---

1) P समनस इति सं मनस । 2) P सर्वे 3) P auffälligerweise नः । धत्ते । 4) P सप्त । योनी ।, M 1 2, H, Bb सप्त योनिर॰, desgl B, ohne Accent, u M Paddh III, S 7a 5) So M 1, 2 u P, in H Bb u B अग्नयो 6) P दत्त्वा । इष्टाः । 7) M 2 आहुतीभाजो 8) So im Anschluss an P पुनः । अस्तं । (s. RV 10, 14, 8), dagegen M 1 H, Bb पुनरस्त M 2 पुनरस्तं 9) So M 1 u 2, P परा । इत, in H, Bb, B परेत 10) P समुद्रः । 11) in M 1 ohne Accent. 12) M 2 कविशस्ता 13) So M 1 2, P नः ।, in H, Bb, B ना 14) P एना 15) M 2 भव 16) P यच्छ । 17) P शम् । यो ।; M 1 शंयोर॰ 18) M 1 ज्योतिस्

पुरीषमसि यच्छा तोकाय तनयाय शंयोर्वात:[1] प्राणस्तदयमग्निः[2] संप्रियः पशुभिर्भव पुरीषमसि यच्छा तोकाय तनयाय शं योः[3] ॥ अविषं नः पितुं पच[4] ॥

कल्पेतां द्यावापृथिवी कल्पन्तामाप ओषधयः ।
कल्पन्तामग्नयः पृथक्[5] मम ज्यैष्ठ्याय सव्रताः ॥
ये अग्नयः समनसा[6] ओषधीषु वनस्पतिषु प्रविष्टाः ।
ते विराजमभिसंयन्तु सर्वा ऊर्जं नो धत्त द्विपदे चतुष्पदे ॥

॥ २ ॥ Vgl 1, 6, 7, 2, 8, 12 — TS 4, 2, 8 1, 3, 5, 11, 1, 1, 8, 16, 1, 4, 6, 5, 5, 4, 4, 11, Kath 7, 13 u. 14, 40, 7, 39, 1, Kap S 6, 3 u 4, 7, 2, VS 29, 12, 17, 65, 34, 15, 17, 89—91. 79, 10, 27, 34, 53 57, TBr 1, 1, 7, 1—3, Man Çr 1, 5, 4 u 5

प्रजापतिर्वा इदमग्र आसीत् वीरुधोऽभ्यरोहन्नसु३र्यो[7] वा एता यदोषधयस्ता अतितिष्ठिघिषन्नतिष्ठिघं नाशक्नोत्सो[8]ऽशोचत्सोऽतप्यत ततोऽग्निरसृज्यत तमग्निं सृष्टं वीरुधां तेजोऽगच्छत्ता अप्रुष्यन्[9] ततः पराप्रुष्यन्त्स[10] प्रजापतिरग्निमाधत्तेमा एवा सहा इति ता असहत तत्साढ्यै[11] वा एष आधीयते तद्यथादो[12] वसन्ताशिशि३रेऽग्निर्वीरुधः संहत एवं सपत्नं भ्रातृव्यमवर्तिं सहते य एवं विद्वानग्निमाधत्त एतावद्वा अस्या अनभिमृतं यावद्वेदिः परिगृहीता तामुद्धत्याप[13] उपसृज्याग्निमाधत्ते[14] यज्ञियामेवैनां[15] मेध्यां कृत्वाधत्तेऽग्नेर्वा इयं

---

1) M 1 शं॰योर्वाते 2) H, Bb प्राणास् 3) M 1 शं॰यो 4) So betonen die Mss 5) P पृथक् । 6) P समनस इति स मनस । 7) So M 1, in M 2 °रोहनसू३यो, H, Bb, B, °रोहन्न म३र्यो 8) So meine Correctur, die Handschriften schwanken, M 1 u 2 अतिष्टिंगोषन्नतिष्टिंग B अतिष्टीगीषनतिष्टिगन्न°, H अतिष्टीगीषतिष्टिंगन्न°, Bb अतिष्टीगीषतिष्टिगन्न° s meine Abhdlg Ztschr DMG XXXIII S 195 9) So M 1 u 2, B अप्रुष्य, H u Bb आयुष्य 10) M 1 u 2 °प्रुष्यन्त्स, H, Bb u B °प्रुष्यत्स 11) So M 1, 2 u H ved Inf von सह्, Pa. 6, 3, 113, s Ztschr DMG XXXIII S 197 Bb तत्साढ्यौ B wohl wie M 1, ohne Accent. 12) So M 1 u 2, in H Bb तद्यथादो 13) H °मुधृत्याप, B °मुद्धत्याप 14) So M 1, H, Bb, in M 2 °माधत्ते, vgl Vorr 15) M 2 यज्ञीयाम°

सृष्टादबिभेदिति मा धक्ष्यतीति । यदप उपसृज्याग्निमाधत्ते ऽस्या अनतिदाहायैषा वै प्रजापतेः सर्वता तनूर्यदापः सर्वत एनं प्रजाः सर्वतः पशवो ऽभि पुष्यन्ति भवन्ति य एवं विद्वानप उपसृज्याग्निमाधत्ते । यावद्वै वराहस्य चषालं तावतीयमग्र आसीद्वराहविहतमुपास्याग्निमाधत्त इमामेव तन्नापाराडस्या[1] एव मात्रायामध्याधत्ते । तस्मादेषा वराहाय विम्रदत एष उ ह्यस्या[2] मात्रां बिभर्ति । देवपाणयो वै नामासुरा आसंस्ते देवगवीरपाजंस्ता अन्वगछंस्ता अभ्याजंस्तासां पयो ऽहीयत ते ऽब्रुवन्नेषां वा आसां वर्म भूते दहास्तेति तं वराहो भूत्वासुरेभ्यो ऽधि देवानागछत्तस्माद्वराहं गावो ऽनुधावन्ति स्वं पयो जानानास्ते द्यावप्रियमेव पशूनां द्विपदां चतुष्पदां पयस्तावप्रियः पशूनां द्विपदां चतुष्पदां भवति य एवं विद्वान्वराहविहतमुपास्याग्निमाधत्त । एतद्वा अस्या अनभिमृतं यद्वल्मीको । यद्वल्मीकवपामुपकीर्याग्निमाधत्ते ऽस्या एवैनमनभिमृते ऽध्याधत्ते । रसो वा एष्यो ऽस्या उदैषद्यद्वल्मीको । यद्वल्मीकवपामुपकीर्याग्निमाधत्ते ऽस्या एवैनं रसे ऽध्याधत्त । ऊर्ग्वा एष्यो ऽस्या उदैषद्यद्वल्मीको । यद्वल्मीकवपामुपकीर्याग्निमाधत्ते ऽस्या एवैनमूर्ज्यध्याधत्ते[10] । प्रजापतेर्वा एष स्तनो यद्वल्मीको । यद्वल्मीकवपामुपकीर्याग्निमाधत्ते प्रजापतिरेवास्मै स्तनमपिदधात्येवाद्यमस्मा

---

1) So die Mss　　2) Bb एव म　　3) M 1 तन्नापाराडस्या, M 2 तन्नापाराडस्या, H Bb तन्नापाराडस्या wo ड offenbar verschrieben für ड desgl B ohne Accent, vgl ferner den Satz Maitr S 4, 8 3 यच्चमुर्ड॰ वा अयोध्यमुर्डमेव नापाराड　　4) So habe ich corrigirt in M 1 u 2 ganz ohne Accent in H u Bb Paroxytonon　　5) So M 1 u 2, in H Bb, B देवागवीर॰　　6) So M 1 u 2 in H, Bb अन्वगछ॰　　7) So M 1, die andern Mss जनानास्　　8) M 2 एतांपद्वा　　9) Bb schiebt hier ein नभिमृते ध्याधत्त　　10) M 1 ॰र्ज्यध्याधत्ते

अवरुन्द्धे[1] ऽक्षुध्यता स्वानां पुरःस्थाता भवति य एवं वेदैतावद्वा अमुष्या इह यज्ञियं[2] यदूषा[3] यदूषानुपकीर्याग्निमाधत्ते[4] ऽमुष्या एवैनं यज्ञिये[5] ऽध्याधत्ते न वा अनूपरिहः[6] पशवो रेतो दधते यदूषानुपकीर्याग्निमाधत्ते रेत एवैतद्दधाति[7] पशूनां पुष्ट्यै प्रजात्या एष वा अग्निर्वैश्वानरो यदसा आदित्यः स यदिहासीत्तस्यैतद्भस्म यत्सिकता यत्सिकता उपकीर्याग्निमाधत्ते स्व एवैनं योनौ स्वे भस्मन्नाधत्ते शिथिरा वा इयमग्र आसीत्तां प्रजापतिः शर्कराभिरदृंहद्यच्छर्करा[8] उपकीर्याग्निमाधत्त इमामेव तद्दृंहति धृत्यै तद्यथेमां प्रजापतिः शर्कराभिरदृंहदेवमस्मिन्पशवो दृंहन्ते य एवं विद्वाञ्छर्करा उपकीर्याग्निमाधत्त इन्द्रो वै वृत्राय वज्रं प्राहरत्तस्य या विप्रुष आसंस्ताः शर्करा अभवन्यच्छर्करा उपकीर्याग्निमाधत्ते वज्रमेव सपत्नाय भ्रातृव्याय प्रहरति यं द्विष्यात्तं हि मनसा ध्यायेद्वज्रमेवास्मै प्रहरति स्तृणुत एव पुरीषीति वै गृहमेधिनमाहुः पुरीषस्य खलु वा एतद्रूपं यदाखुकिरिर्यदाखुकिरिमुपकीर्याग्निमाधत्ते पुरीषी गृहमेधी भवति ॥ ३ ॥

Vgl Kāth 8, 2, Kap S 6, 7

अग्निं वै देवा विभाजं[9] नाशक्नुवन्यत्प्राञ्चमहरन्सर्वः पुरो ऽभवद्यत्प्रत्यञ्चमहरन्सर्वः पश्चाभवत्तमश्वेन पूर्ववाहोदवहंस्तदश्वस्य पूर्ववाहः पूर्ववाट्त्वमग्नये वै विभक्त्या अश्वो ऽग्न्याधेये दीयते ऽविभक्तो

---

1) So M 1 u 2; in H u Bb bloss अवरुन्द्धे betont, aber क्षुध्यता auch ohne Accent, was deutlich auf die Schreibung von M 1 u 2 hinweist 2) M 2 यज्ञीय 3) M 1 यदुषा 4) M 1 यदुषानु॰ 5) M 2 यज्ञीये 6) So M 1, in H, Bb u B अनूपरिय, M 2 अनुपरिह 7) So M 1 u 2, in Bb दधाति 8) H, Bb ॰रदृंहयत्, B ॰रदृंहयत् 9) So M 1 (vgl TBr 1, 1, 5, 6), M 2 वीभाज, H, Bb, B विभाजन॰, Kap S 7, 1 अग्निर्वै विराज नाशक्नुवंस्तमश्वेन व्यभज cet., offenbar zu corrigiren in अग्निं वै विभाजं cet

वा एतस्याग्निरनाहितो यो ऽश्वमग्न्याधेये न ददात्यथ यो ऽश्वमग्न्याधेये ददाति विभक्त्यै विभाज्यैवैनमाधत्ते स्तोमपुरोगवा वै देवा असुरानभ्यजयन्नेष खलु वै स्तोमो यदश्वो यदश्वं पुरस्तान्नयन्त्यभिजित्या अभिजित्यैवैनमाधत्ते प्रजापतेर्वै चक्षुरश्वयत्तस्य यः श्वयथा आसीत्सो ऽश्वो ऽभवद्यदश्वं पुरस्तान्नयन्ति यजमानायैव चक्षुर्दधाति न पराङवसृज्यो यत्पराञ्चमवसृजेद्यजमानं चक्षुर्जह्यादन्धः स्यात्प्रत्यवगृह्याधेयो यजमानायैव चक्षुः प्रत्यवायहीन्न पदं आधेयो वास्तव्यं कुर्याद्रुद्रो ऽस्य पशूनभिमानुकः स्यात्पार्श्वत इतो वेतो वाधेयो न वास्तव्यं करोत्यघातुको ऽस्य पशुपतिः पशून्भवति गायत्री वै देवा यज्ञमच्छ प्राहिण्वन्सा रिक्ताऽगच्छत्तस्या अग्निस्तेजः प्रायच्छत्सो ऽज्ञो ऽभवद्यदजमग्न्याधेये ददाति तेज एवावरुन्द्धे ऽग्नीधे देयो यज्ञमुखं वा अग्नीद्यज्ञमुखेनैव यज्ञमुखं समर्धयति धेनुं चानड्वाहं च ददाति तत्सर्वं वयो ऽवरुन्द्ध एतद्वै सर्वं वयो यद्धेनुश्चानड्वांश्चैतौ वै यज्ञस्य माता च पिता च यद्धेनुश्चानड्वांश्चाज्यं च पयश्च धेन्वाः पुरोडाशश्च चरुश्चानडुहस्तदाहुः कामदुघा वा एषो ऽवरुन्द्धे यो ऽग्न्याधेये धेनुं चानड्वाहं च ददातीति तद्येषां पशूनां भूयिष्ठां पुष्टिं कामयेत तेषां दित्यौही वयसो दद्यादित्यवाहं च मुष्करं तन्मिथुनं पशूनां पुष्ट्यै प्रजात्यै वाग्वै सोमक्रयणी दित्यौही वयसः सोमक्रयणी यद्दित्यौही वयसो ददाति वाचमेवावरुन्द्धे चारु वदति य एवं वेदोपवर्हणं सर्वसूत्रं देयं छन्दसां वा एतन्निरूपं यदुपवर्हणं सर्वसूत्रं

1) d. h. श्वयथ die Schwellung, vgl. Çat. Br. 4, 2. 1, 11. M. I. u. 2 lesen यं श्वयथा, H, Bb u. B यंश्वयथा vgl. auch TS 5, 3, 12. 1. 2) So M. I. u. 2, in H u. Bb d. Verb ohne Accent. 3) So die Mss., also adverbial. 4) Von hier bis zum folgenden यदुपव° in H u. Bb fehlend.

यदुपबर्हण॰ सर्वसूत्रं ददाति छन्दांस्येवावरुन्द्धे पशवो वै छन्दांसि पशूनेवावरुन्द्धे ऽयज्ञियो[1] वै पुरुषो ऽमेध्य आहनस्याज्जायते पुरुषक्षीरं धयति हिरण्यं ददात्यात्मानमेवं तेन पुनीते शतमानं भवति शतायुर्वै पुरुषः शतवीर्य आयुरेव वीर्यमाप्नोति पूर्वयोर्हे विपोर्ह्ये त्रिंशन्माने देये उत्तरस्मिंश्चत्वारिंशन्मानं तदेनमुदयहीत्तेन स उत्तरं वसीयाञ्छ्रेयान्भवत्यजातो वै तावत्पुरुषो यावदग्निं नाधत्ते स तर्ह्येव जायते यर्ह्यग्निमाधत्ते क्षौमे वसाना अग्निमादधीयातां ते अध्वर्यवे देये उल्बस्य वा एतद्रूपं यत्क्षौममुल्बमेवापलुम्पेते[2] हिरण्यं सुवर्णमुपास्याग्निराधेयो हिरण्यं वा अग्नेस्तेजः सतेजसमेवैनमाधत्ते तन्न निरस्तवै यथानुहितं निरस्येदेवं तद्यन्निरस्येदनुध्यायी क्षोधुकः स्यात्तन्न निरस्तवा अननुध्याय्यक्षोधुको भवति ॥ ४ ॥ Vgl TBr 1, 1, 5, Kâth 8, 5, Kap S 7, 1 u. 2

यो वा अस्यायं मनु३ष्यो[3] ऽग्निरेतमुपासीतोन्नमत्येतमुपासीनः[4] प्रजां विन्दत एतमुपासीनं पशव उपतिष्ठन्ते यदेतमभागधेयमुत्सादयेत तस्मा आवृश्चेतानुध्यायी क्षोधुकः स्यात्तद्वै वनस्पतय आरण्या आढ्यं फलं भूयिष्ठं पच्यन्ते[5] तस्य पर्णाभ्यां यवमयश्चापूपो व्रीहिमयश्च संगृह्योपास्याधेयस्तदेनं स्वं भागधेयमभ्युत्सादयामकर्माम्यं[6] चारण्यं च तेन तस्मै नावृश्चते ऽननुध्याय्यक्षोधुको भवति यवो वै पूर्वं ऋतुमुखे पच्यत[7] इतः खलु वा एते मा-

1) So M 1, in M 2 यज्ञीयो, H, Bb यज्ञियो 2) So M 1, M 2 °मेवापलुंपते, H, Bb u B °मेवोल्बोपलुंपेते 3) So die Mss 4) M 2 °पासीतोन्न°, ebenso M 1 (u Bl), ohne Accent, Bb °मुपासीतोन्न° 5) So M 2, in M 1 (u Bl ohne Accent), H, Bb ohne Accent, sonst ebenso, über die eigenthümliche Construction s m Abhdlg ZDMG XXXIII, S 199, cf unten 1, 8, 1, 3, 7, 8 6) So die Betonung in M 2, in M 1 u Bl ohne Accent, in H Bb °मभ्युत्सादयामक°, s Ztschr DMG XXXIII, S 195, Pâ 3, 1, 42 7) M 2 पच्यंते

अमुं हरन्ति तस्माद्यवमयः पश्चोपास्यो व्रीहिमयः पुरस्ताद्यस्यैतौ यवमयमेव तस्य पश्चोपास्येद्व्रीहिमयं पुरः प्रजापतेर्वा एतौ स्तनौ यज्ञमस्य देवा उपजीवन्ति वर्षं मनुष्या अन्नाद्यमस्मा अवरुन्द्धे ऽह्नुध्यता स्वानां पुरःस्थाता भवति य एवं वेदैतद्ध स्म वा आह केशी सात्यकामिः केशिनं दार्भ्यमन्नादं जनताया एवमिव वयमेतस्मा अग्न्याधेये ऽन्नमवारुध्म यथैषो ऽन्नमत्ति तदाहुः सर्वं वा एतस्येदमन्नं यजमाने उत्तेवास्यैतदासन्नमपिदधाति तदेवं वेदितोर्न उत्तेवं कर्तवा इति चित्रं वा इदं प्रजापतिः सत्यं व्याहरत् ॥ भूर्भुवः स्वः ॥ इतीदं वाव भूरिदं भुवो ऽदः उस्वस्तद्यो ब्राह्मण आङ्गिरसः स्यात्तस्यादध्याद्भूर्भुवो ऽङ्गिरसां त्वा देवानां व्रतेनादधा इति पश्चा भुवः उस्वरिति पुरो द्विः पश्चा द्विः पुरस्ताद्द्वेधा यज्ञः सत्ये मर्त्यश्चाद्द्वेधा यज्ञपतिरेष यो ब्राह्मणो वैश्वानरः स्यात्तस्यादध्याद्भूर्भुवो ऽग्नेष्ट्वा देवस्य व्रतेनादधा इति पश्चा भुवः उस्वरिति पुरो द्विः पश्चा द्विः पुरस्ताद्द्वेधा यज्ञः सत्ये मर्त्यश्चाद्द्वेधा यज्ञपतिरेष राजन्यः स्यात्तस्यादध्याद्भूर्भुवा इन्द्रस्य त्वा मरुत्वतो व्रतेनादधा इति पश्चा भुवः उस्वरिति पुरो द्विः पश्चा द्विः पुरस्ताद्द्वेधा यज्ञः सत्ये मर्त्यश्चाद्द्वेधा यज्ञपतिरैन्द्रो वै राजन्यो देवतया मारुती विड्विशा खलु वै राजन्यो भद्रो भवति विशमस्मा अवरुन्द्धे ऽथ वैश्यस्यादध्याद्भूर्भुवो मनोष्ट्वा ग्रामण्यो व्रतेनादधा इति पश्चा भुवः उस्वरिति पुरो द्विः पश्चा द्विः पुरस्ताद्द्वेधा यज्ञः सत्ये मर्त्यश्चाद्द्वेधा यज्ञपतिर्ग्रामणीय्येन खलु

1) So M 2, desgl. M 1, nur ohne Accent (u. Bl), in B °मय पश्चोपास्येद्व्रीहिमय, Bb °मय पश्चोपास्यित व्रीहिमय 2) So M 2, M 1 u. Bl ohne Accent, H u. Bb उपजीवति 3) In allen Mss ist ह्नुध्यता° ohne Accent, aber nur in M 2 die nothwendige Doppelbetonung अवरुन्द्धे in H u. Bb undeutl., M 1 u. B ohne Accent. 4) So M 2, desgl. M 1 u. Bl ohne Accent, dagegen in H, Bb u. B °मेतस्मान्या°

वै वैश्यो भद्रो भवति यामणीय्यमस्मा अवरुन्द्धे ऽग्निर्वै सृष्ट उल्बमपलुम्प्यं नाशक्नोत्तस्य प्रजापतिराग्नेयपावमानीभिरुल्बमपालुम्पद्यदाग्नेयपावमानीभिराश्वत्थीः समिध आदधात्युल्बमेवास्यापलुम्पति पुनात्येनं यथा शिशुं माता रेढि वत्सं वा गौरेवमेनं रेढ्यग्नेर्वै सृष्टस्य तेजा उददीप्यत तदश्वत्थं प्राविशद्यदाश्वत्थीः समिध आदधाति तेज एवावरुन्द्धे ऽग्निर्वै सृष्टो बिबिबाभवन्नतिष्ठत्समिध्यमानः[1] स प्रजापतिरबिभेन्मां वावायं हिंसिष्यतीति तं शम्या समैन्धत्तमशमयत्तच्छम्याः शमीत्वं यच्छमीमयीः समिध आदधाति समेनमिन्द्धे[2] शमयत्येव स शं यजमानाय भवति शं पशुभ्यो देवा यत्रोर्जं व्यभजन्त तत उदुम्बर उदतिष्ठद्यदौदुम्बरीः समिधमादधात्यूर्जमेवावरुन्द्धे ॥ ५ ॥ Vgl Kap 5–6, 9, TBr 1, 1, 5, 1, 1, 3

विप्रियो वा एष पशुभिराधीयत एष हि रुद्रो यदग्निस्तद्वाचयेद् घर्मः शिरस्तदयमग्निः संप्रियः पशुभिर्भव पुरीषमसीति तदेनं संप्रियं पशुभिः पुरीषिणमकर्यत्ते शुक्र शुक्रं ज्योतिस्तेन रुचा रुचमशीथा इति रुचमेवैनमजीगमद्द्वेषो वा अग्निर्वैश्वानरो यदसा आदित्यो यदुत्तरतो हरेद्द्वेषो ऽतः स्यादयमितो[3] जीवन्तमेवैनं प्रदहेत्से दक्षिणत एवं हाउयेः स यदा समयाध्वं गच्छेदथ यजमानो वरं दद्यात्तद्धिराजं मध्यतो ऽधित विराड्वा अस्यामीन्विदधते पशवो वै

---

1) So M 1 u 2, in H विचिबाभवन्नतिष्ठद्°, Bb बिबिबाभवतिष्ठद्° (oder विवि°); B विबिबाभवन्नतिष्ठद्°, MPaddh III S 6b विबिबाभवन्नतिष्ठद्° 2) So schreibe ich mit M 2, desgl M 1 u Bl, ohne Accent u MPaddh III, S 6b, B शमेनमिंधे, H, Bb शमेम समिंधे, cf, 1, 6, 7 3) So im Anschluss an M 2 °द्वेषो न स्याद°, desgl M 1 u Bl, ohne Accent H °द्वेषो न स्योद°, desgl B, ohne Accent; Bb °द्वेषा न स्योद°

विराट् पशून्वा एतन्मध्यतो ऽधितासृष्टो[1] वा अग्निरासीदथ प्रजापतिः प्रजा असृजत ता अन्धे तमसीमाँल्लोकाननु व्यनश्यन्त्सो ऽशोचत्सो ऽतप्यत ततो ऽग्निरसृज्यत तमग्निं सृष्टमधो न्युदधात्ते या अस्मिँल्लोक आसंस्ता अभिसमावर्तन्त तं कुल्फदघ्नमुदगृह्णात्ते या उत्तरस्मिँल्लोक आसंस्ता अभिसमावर्तन्त तं जानुदघ्नं तं नाभिदघ्नं तमंसदघ्नं तं कर्णदघ्नमुदगृह्णात्ते या उत्तरस्मिँल्लोक आसंस्ता अभिसमावर्तन्त तं कर्णदघ्नं नात्युदगृह्णाद्यत्कर्णदघ्नमत्युद्गृह्णीयाद्यजमानो वेपिष्ठः पशूनां यजमानमुपरिष्टादभि व्यवदहेत्तदाहुः कथमग्निं ब्रह्मणाहितं प्रच्यावयेयुः[3] शिथिरं वा एनमेतदकः परेन वपतीति तमनिधायैवाथ जानुदघ्नमुद्गृह्णीयादथ नाभिदघ्नमथांसदघ्नं तद्यथैव प्रजापतिं प्रजा एभ्यो लोकेभ्यो ऽभिसमावर्तन्तैवमेवं यजमानं पशव एभ्यो लोकेभ्यो ऽभिसमावर्तन्ते य एवं विद्वानग्निमाधत्ते ऽग्निना वै देवतया विष्णुना यज्ञेन देवा असुरान्प्रह्णीय वज्रेणान्ववासृजन्त्सपत्नवान्भ्रातृव्यवान्वा स्यात्तस्य रथचक्रं त्रिरनुपरिवर्तयेयुस्तद्यथैव देवा असुरानग्निना देवतया विष्णुना यज्ञेन प्रह्णीय वज्रेणान्ववासृजन्नेवमेवं यजमानः सपत्नं भ्रातृव्यमग्निना देवतया विष्णुना यज्ञेन प्रह्णीय वज्रेणान्ववसृजति य एवं विद्वानग्निमाधत्ते ॥ ६ ॥ Vgl TBr. 1, 1, 7

एष वै प्रजापती रूपेण यत्पूर्णा स्रुग्यत्पूर्णां स्रुचं जुहोति प्रजापतिमेवाप्नोति सप्त ते अग्ने समिधः सप्त जिह्वा इत्येतावतीर्वा अग्नेस्तन्वः षोढा सप्त सप्त यो वा अस्यैता अग्निमादधानो वित-

1) So M 2 desgl M 1 u Bl., ohne Accent H, Bb धित सृष्टो, desgl B, ohne Accent. 2) in H u Bb ist das Verb betont 3) M 2 प्रच्यावयेयु 4) So M 2, in H, Bb °मुद्गृह्णीयां, M 1 u Bl 5) So corrigirt, die Mss प्रजापति

पयति वि ह तृप्यति ता एवास्य तर्पयति शमीमयीस्तिस्रः समिधा आदधाति घृतान्वक्ता[1] घृतस्तोम्याभिः समेनमिन्द्धे[2] शमयत्येवैनं शं[3] यजमानाय भवति[3] शं पशुभ्यो ये वा एषु त्रिषु लोकेष्वग्नयस्ते समागच्छन्त्यस्य द्रविणमाददामहा अति नो ऽक्रमीद्धव्यवाड् भवतीति तं जुहुयात् ॥

ये अग्नयो दिवो ये पृथिव्याः समागच्छन्तीषमूर्जं[4] वसानाः ।
ते अस्मा अग्नये द्रविणं दत्त्वेष्टाः प्रीता आहुतिभाजो[5] भूत्वा
यथालोकं पुनरस्त[6] परेत ॥

स्वाहेति तदिममेव द्रविणवन्तं कृत्वेष्टाः प्रीता आहुतिभाजो[7] भूत्वा यथालोकं पुनरस्त[8] परायन्ति तद्वाचयेद् घर्म शिरस्तदयमसि संप्रियः पशुभिर्भव पुरीषमसीति तदेनं संप्रियं पशुभिः पुरीषिणमकर्यत्ते शुक्र शुक्रं ज्योतिः शुक्रं धामाजस्रं तेन त्वादधा इति सतेजसमेवैनमाधत्ते ॥

इडायास्त्वा पदे वयं नाभा पृथिव्या अधि ।
जातवेदो निधीमह्यग्ने[9] हव्याय वोढवे ॥

इति हव्यवाहमेवैनमकरेवं सृष्टस्य पशवो ऽक्ष्या[10] अवक्राय[11] प्रापतन्त्सं प्रजापतिर्वारवन्तीयमसृजत तानवारयतैतैर्हि खलु वा एषं सृज्यते यद्वाधीयते तद्यैतेसास्तृष्टात्पशव प्रापतन्नेवमस्मादा-

1) So M 1 u. 2, in H Bb घृतान्वक्ता 2) So M 1 u. ° in H Bb u. B समिन्धे 3) So M 1 u. ° in H u. Bb ohne Accent 4) So M 1 ° B, in H चपयोः; Bb घर्षयो 5) M 2 आहुतीभाजो 6) So M ° in M 1 H Bb पुनरस्त 7) M 1 2 आहुतीभाजो 8) So corr. M 1 H Bb पुनरस्त M 2 पुनरस्तं 9) So M 1 u. 2 H, Bb B निधिम॰ 10) So H Bb desgl. B ohne Accent M 1 क्षा M ° क्षं 11) So M 1, in M 2 चपयाय H u. Bb चवक्राय desgl. B ohne Accent.

हितात्पशवः प्रपतन्त्येषं हि रुद्रो यदग्निस्तद्य एवं विद्वान्वारवन्तीयं गायते पशूनेव वारयते वारवन्तीयं वै सृष्ट्वा प्रजापतिर्यं काममकामयत तमाप्नोत्तमेव काममृध्नोति यजमानो यं कामं कामयमानोऽग्निमाधत्ते य एवं विद्वान्वारवन्तीयं गायतेऽग्निर्वै क्रव्याद्विश्वदाव्य इमांल्लोकानदहत्तं प्रजापतिर्वारवन्तीयं गायमानो वरणं बिभ्रदत्येत्तमशमयद्यदेवास्य क्रव्याद्यद्विश्वदाव्यं तच्छमयति य एवं विद्वान्वारवन्तीयं गायते तस्माद्वरणो यज्ञावचरः स्यात्तेनेन जुहुयाद्यद्वा इदं संभूतं यज्ञवद्यज्ञविषयं यदिमे[1] अन्तरा द्यावापृथिवी तद्वामदेव्यं तदेवावरुन्द्धे य एवं विद्वान्वामदेव्यं गायते ब्रह्मणो वा एष रसो यद्यज्ञायज्ञियं यद्यज्ञायज्ञियं गायते ब्रह्मण्येव रसं दधाति ॥ ७ ॥ Vgl 1, 6, 2 — TBr 1, 1, 8.

अग्निं वै सृष्टं प्रजापतिः पवमानेनान्नाय उपाधमद्यत्पवमानाय निर्वपत्युपैवैनं तद्धमति यत्पावकाय पुनात्येनं यच्छुचये यदेवास्यापूतं तदेतेन पुनाति यत्पवमानाय निर्वपति पशवो वै पवमानः पशूनेवावरुन्द्धे यत्पावकायान्नं वै पावकमन्नमेवावरुन्द्धे यच्छुचये पूत एवास्मिन्रुचं दधाति यं कामयेतापतरं पापीयान्स्यादिति तस्यैकमेकं हवींषि निर्वपेत्तदेनमपाग्रहीत्तेन सोऽपतरं पापीयान्भवत्यथ यं कामयेत न वसीयान्स्यान्न पापीयानिति तस्य सर्वाणि साकं हवींषि निर्वपेत्तदेनं संरुणद्धि तेन स न वसीयान्न पापीयान्भवत्यथ यं कामयेतोत्तरं वसीयाञ्छ्रेयान्स्यादिति तस्याग्नये पवमानाय निरुप्याथ पावकाय च शुचये चोत्तरे

---

1) M 2 यदीमें   2) M 2 °यज्ञीय   3) So corr., die Mss. पूतयेवा°   4) So M 1, dagegen M 2, H, Bb betonen das Verb संप°

हविषी[1] समानबर्हिषि[2] निर्वपेत्तदेनमुदग्रहीत्तेन स उत्तरः वसीयाञ्छ्रेयान्भवत्यथ यस्य[3] त्रिष्टुभौ वानुष्टुभौ वा जगती वा सयाज्ये स्यातामति गायत्रं क्रामेद्देवीकच्छन्दोभ्यो ऽवपद्येत तद्यस्यैते गायत्र्या[4] एवं तस्य सयाज्ये कुर्याद्गायत्रो ह्यग्निर्गायत्रच्छन्दाः स्व एवैनं योनौ स्वे छन्दसि प्रतिष्ठापयत्याग्नावैष्णवमेकादशकपालं निर्वपेदग्निर्वै सर्वा देवता विष्णुर्यज्ञो देवताश्चैव यज्ञं चालब्ध विष्णवे शिपिविष्टाय त्र्युद्धौ घृते चरुं निर्वपेद्यद्विष्णवे विष्णुर्वै यज्ञो यज्ञमेवालब्ध यच्छिपिविष्टे पशवो वै शिपिविष्टं पशूनेवावरुन्द्धे यत् त्र्युद्धौ त्रयो वा इमे लोका इमानेव लोकानाप्नोति यद्घृते तेजो वै घृतं तेज एवावरुन्द्ध आदित्यं घृते चरुं निर्वपेत्पशुकामो धेन्वा वै घृतं पयो ऽनडुहस्तण्डुलास्तन्मिथुनं पशूनां पुष्ट्यै प्रजात्या अग्नीषोमीयं पुरोडाशं द्वितीयमनुनिर्वपेत्तद्भूयो हव्यमुपागान्नो[5] अस्यान्य ईशे यर्हि वा एते पुरा ब्राह्मणा निरवपंस्तर्ह्येषां न कश्चनेश न हि वा एतमिदानीं निर्वपन्त्यथैषां सर्व ईशे यदाग्नेयस्तेजो वा अग्निस्तेज एवावरुन्द्धे यत्सौम्यः सोमो वै शुक्रो ब्रह्मवर्चसं[6] ब्रह्मवर्चसमेवावरुन्द्धे तद्वो ऽसा आदित्यो घृते चरुस्त ब्रह्मणे परिहरेयुस्ते चत्वारः प्राश्नीयुस्तेभ्यः समानो वरो देयश्चतुर्वा[7]

---

1) So corr, M 1 हवीषि, M 2 हविषि, H, Bb u B हवी॰षि 2) So M 1 u 2, in H u Bb समानबर्हिषि, desgl B, ohne Accent Wahrscheinlich ist aber zu corrigiren in समानबर्हिषी, dafur spricht noch besonders Kap S 7, 3 wo zweimal der Satz vorkommt समानबर्हिषी उत्तरे कार्ये 3) Bb तद्य 4) So M 2, in M 1 गायत्र्यां, H, Bb गायत्रीया desgl B, ohne Accent 5) So M 1 u 2, H u Bb •मुपागान्नो 6) H u Bb schalten hier noch ein ब्रह्मवर्चस ein 7) So M 1 u 2, desgl B, ohne Accent, dagegen H u Bb चर्त्वा

इदमग्रे मिथुनमासीदेकश्चैका च' द्वौ च द्वे च' त्रयश्च तिस्रश्च' चत्वारश्च चतस्रश्च' तन्मिथुनं पशूनां पुष्ट्यै प्रजात्यै ॥ ८ ॥

Vgl. TBr. 1, 1, 6

फल्गुनीपूर्णमासे ब्राह्मणस्यादध्यात्फल्गुनीपूर्णमासो वा ऋतूनां मुखमग्निर्देवतानां' ब्राह्मणो मनुष्याणां' ग्रीष्मे राजन्यस्यादध्याद् ग्रीष्मे वा इन्द्रो वृत्रमहन्वृत्रं खलु वै राजन्यो बुभूषन्जिघांसति' शरदि वैश्यस्यादध्यादन्नं वै शरदन्नेन वैश्यो भद्रो भवत्यन्नाद्यमस्मा अवरुन्द्धे' यद्यन्यस्मिन्नृता आदधीत यदि वा अस्मै स एक ऋतुः शिवः स्याद्यास्मा इतरे ऽशिवा दुर्योणा भवेयुस्तद्यस्यैतस्मिन्फल्गुनीपूर्णमास एव तस्यादध्यात्तदस्मै सर्व ऋतवः शिवा भवन्ति' सर्व एनमृतवो जिन्वन्ति' संवत्सरस्य वा एतदास्यं यत्फल्गुनीपूर्णमास्यमहर्यत्फल्गुनीपूर्णमास्यमहरादध्यात्संवत्सरस्यैनमास्ये ऽपिदध्याद् ग्रहे वा पुरैकाहे वाधेयस्तद्द्वितीयस्य ऋतोरभिगृह्णाति' नैनं संवत्सरस्यास्ये ऽपिदधाति' तद्यद्द्वितीयस्य ऋतोरभिगृह्णाति द्वितीयमेव सपत्नस्य भ्रातृव्यस्येन्द्रियं पशून्क्षेत्रं वृञ्जान एति' कृत्तिकासु ब्राह्मणस्यादध्यादाग्नेयीः कृत्तिका' आग्नेयो ब्राह्मणः' स्व एवैनं योनौ स्वे ऽह्नाधत्ते' प्रजापतेर्वा एतच्छिरो यत्कृत्तिका' अग्निरास्यं शीर्षण्वानमद्यते' ऽन्नाद्यमस्मा अवरुन्द्धे' सप्त कृत्तिकाः' सप्त शीर्षन्प्राणाः' प्राणानस्मिन्दधाति' रोहिण्यां पशुकामस्यादध्यात्सोमस्य वा एतन्नक्षत्रं यद्रोहिणी' सोमो रेतोधा' रेतो ऽस्मिन्दधात्यूषा वा इयमग्र आसीत्तस्यां देवा रोहिण्यां वीरुधो ऽरोहयंस्तद्वेमा अस्यां वीरुधो रूढा एवमस्मिन्पशवो रोहन्ति य एवं विद्वान्रोहिण्यामग्निमाधत्ते' रोहिण्यां स्वर्गकामस्यादध्याद्रोहिण्यां वै देवाः

1) H, Bb क्तौर॰

स्वगायनं सूर्य एवेति कालकाञ्जा वा असुरा इष्टका अचिन्वत दिवमारोक्ष्यामा इति तानिन्द्रो ब्राह्मणो ब्रुवाण उपैत्स एतामिष्टकामुपाधत्त प्रथमा इव दिवमाक्रमन्तापि स तामावृहत्ते ऽसुराः पापीयांसो भवन्तो ऽपाभ्रंशन्त यावुत्तमावास्तां तौ श्वानौ दिव्यावभवतां यं ऽपरे तं ऊर्णावाभयो याः तामिष्टकामावृहन्त चित्राभवद्यः सपत्नवान्भ्रातृव्यवान्त्स्यात्स चित्रायामग्निमादधीत तद्ध्येतस्यामावृहायामसुराः पापीयांसो भवन्तो ऽपाभ्रंशन्तैवमस्य सपत्नो भ्रातृव्यः पापीयान्भवन्नपभ्रंशते य एवं विद्वांश्चित्रायामग्निमाधत्ते यः कामयेत भगी प्रदातः स्यामिति स पूर्वासु फल्गुनीष्वग्निमादधीत भगस्य वा एतदहर्यत्पूर्वाः फल्गुनी भगी प्रदातो भवत्येव यः कामयेत दानकामा मे प्रजाः स्युरिति स उत्तरासु फल्गुनीष्वग्निमादधीतार्यम्णो वा एतदहर्यदुत्तराः फल्गुनीर्दानमर्यमा दानकामा अस्मै प्रजा भवन्ति तासु राजन्यस्यादध्याहानं अथैयं प्रजानामुपजीवति दानमर्यमा दानकामा अस्मै प्रजा भवन्ति प्रजापतेर्वा एतौ स्तनौ यत्पौर्णमासी चामावास्या च पौर्णमास्यां चामावास्यायां चाग्निमाधत्ते प्रजापतिमेव प्रत्तं दुहे देवानां वा एते सदोहविर्धाने यत्पौर्णमासी चामावास्या च पौर्णमास्यां चामावास्यायां चाग्निमाधत्त उभे पुण्याहे उभे यज्ञिये ॥ ९ ॥

Vgl. Kāṭh. 8, 1, Kap. 8, 6 6; TBr 1, 1, 2, Mān. Çr. 1, 5, 1

---

1) M 1 u. 2 चैपत् 2) So M 1 u. 2, in H u. Bb यमश्वां. Statt dieses Wortes ist Kāṭh. 8, 1; Kap. 8, 6 u. TBr 1, 1, 2, 6 दिव्यौ श्वानौ gebraucht, dagegen findet sich यमश्व Kāṭh. 37, 14 in dem Satze एतौ ह यमश्वा भद्रश्च राश्री च 3) So M 1 u. 2, in H u. Bb यभवता॰ 4) So M 1 u. 2, in H u. Bb याः 5) So M 1 u. 2, in H u. Bb यर्द्दि 6) So M 1, H, Bb, in M 2 ॰मास्यां॰

न पुरा सूर्यस्योदेतोरग्निमादधीतासुर्यो विदेवा आधीयत उद्यत्सु रश्मिषु मध्यतस्तस्य देवः सेन्द्र उभयोरह्नो रूप आधीयते चतुर्विंशत्या प्रक्रमेष्वाधेयश्चतुर्विंशत्यक्षरा वै गायत्री गायत्रमग्नेश्छन्दः स्व एवैनं योनौ स्वे छन्दस्याधत्ते तद्यस्येत्सेदपरिमित एवं तस्यादध्यात् क्षेणु वै परिमितमपरिमितमेवास्मै जीवनमवरुन्द्धे ऽग्निर्वै सृष्टः प्रजापतेरध्युदक्रामत्स प्रजापतिरबिभेदिद एवासाम्भूदिदमहमिति तस्मिन्ननुनिष्क्रम्याजुहोदेतर्हि खलु वा एष सृज्यते यत्राधीयते तदाहुरस्मा एवानुदुत्याग्निहोत्रं होत३व्यमिति तन्नैवं कर्तवा अयतं तत्कुण्डपायीयं तद्यज्ञस्य क्रियते यद्योनेः परमेवं कुर्यादप्रजनिष्णुः स्याद्बवीऽपैव पूर्वाणि निरुप्याथ सायमग्निहोत्रं जुहुयात् ॥ अग्निर्ज्योतिर्ज्योतिरग्निः स्वाहा ॥ इति तत्सायं ज्योतिषा रेतो मध्यतो दधाति ॥ सूर्यो ज्योतिर्ज्योतिः सूर्यः स्वाहा ॥ इति *प्रातस्तत्सायं ज्योतिषा रेतो मध्यतो हितं ॥ प्रातः प्रजनयामकेर्दे*-वाश्च वा असुराश्च संयत्ता आसंस्तेष्विन्द्रो ऽग्निमाधत्त ते देवा अबिभयुरिद एवासा अग्निं गोपायमानो ऽग्निहोत्रं गोपायमानो भविष्यति न ना उपैष्यत्यभि नो जेष्यन्तीति ते ऽब्रुवन्यदेव त्वं किंच करवो यद्धना यज्जिना यद्विन्दासै तत्ते ऽग्निहोत्रं कुर्मो ऽथेहीति स वा ऐत्तस्माद्राजन्यस्याग्निहोत्रमहोत३व्यं यद्ध्येवायं किंच करोति यद्धन्ति यज्जिनाति यद्विन्दते यदेनं विश उपतिष्ठन्ते तद्राजन्यस्याग्निहोत्रं हो-

---

1) So M 1 u 2, H, Bb u B असूर्यो 2) So M 1, (d h विदेव), M 2 वैदेवा, H, Bb वै देवा, desgl B, ohne Accent 3) So meine Correctur, die Mss सदेव-सेंद्र, vgl 1, 9, 5 सेन्द्रेण यज्ञेन यजते 4) Bb एवंमस्यादध्यात् 5) Bb वै प-रिमितमेवास्मै 6) M 2 निक्रम्या° die andern Mss नि क्रम्या° 7) So M 1 u 2, H, Bb (aus धर्मस्, vgl 1, 10 10), B °रसा 8) M 1, H u Bb कुड्यायीयं, M 2 कुड्यायीय, B मुड्यायीय, vgl Bothl Wb, Bd II, Nachträge 9) So M 1 u 2, in H, Bb u B ज्योतिषा

तव्यं[1] राजन्यस्याग्निहोत्रा३न्[2] होतव्या३मि[3]ति मीमांसन्ते यद्धुत्वा न जुहुयाद्धि यज्ञे छिन्द्याज्जीयेत वा प्र वा मीयेत पौर्णमासीममावास्यां वा प्रति होत३व्यमथो अग्न्युपस्थानं वा चयित३व्यं[4] तेनास्य दर्शपूर्णमासौ संतता अविछिन्नौ भवतः ॥ १० ॥

Vgl. Kath. 8, 3. Kap. S. 6, 8. TBr. 1, 1, 6.

यं कामयेत पशुमान्त्स्यादिति यो बहुपुष्टस्तस्य गृहादग्निमाहरेयुर्यथा वा एतं सृज्यमानं पशवो ऽन्वसृज्यन्तैवमेनमाह्रियमाणं पशवो ऽन्वायन्त्येष हि रुद्रो यदग्निरथ यं कामयेतान्नादः स्यादिति तस्य भ्राष्ट्राद्दक्षिणाग्निमाहरेयुरपि वा अग्नीनामन्नादो ऽन्नकरणं भ्राष्ट्रमन्नाद्यमस्मा अवरुन्द्धे तदाहुर्यथा वृषलो निर्जः पुंश्चल्यार्द्ध-[5]क्लिसेदेवं स इति स मध्य एवं स शं यजमानाय भवति शं पशुभ्यो यः[6] सोमेनायक्ष्यमाणो ऽग्निमादधीत न पुरा[7] संवत्सराद्धवींष्यपि निर्वपेद्रुद्रो ऽस्य पशूनभिमानुकः स्यादेते वै पशवो यद्व्रीहयश्च यवाश्च तेषां चतुःशरावमोदनं पक्त्वा ब्राह्मणेभ्यो जीवतण्डुलमिवोपहरेत्तद्याभ्यो देवताभ्यो ऽग्निमाधत्ते याभ्यो न जुहुयात्ताभ्य आवृश्च्येतानुध्यायी क्षोधुकः स्यात्ताभ्य आज्यस्य होत३व्यं तेन ताभ्यो नावृश्च्यते ऽननुध्याय्यक्षोधुको भवति संवत्सरे हवींष्यपि[8] निर्वपति तदस्य संवत्सरान्तर्हितो रुद्रः पशून्न हिनस्ति संवत्सरमग्निहोत्रमहौषीत्तन्नमो ऽविदत्तं सर्वेण साकं स्वर्गं लोकं समारुक्षत् चिर्वा इदं विराड् व्यक्रमत गार्हपत्यमाहवनीयं

---

1) M 2 °होर्थमहोतव्यं (doch wohl so erst corrigirt.) 2) So corrigirt M 1 u. 2 °होत्राश्च H Bb °होत्रा न B °होत्रा न als die Pluti fehlt in allen Mss. 3) Vgl. 1, 8, 5 u. 7, H Bb u. B होत३व्यमिति M 1 होतव्यामिति 4) So M 1 u. 2, in H Bb u. B चित३व्यस् 5) So M 2, in H Bb u. B पुंश्चल्यादि°, M 1 पुंश्चल्याच्छि° 6) So M 1 u. 2, in H Bb u. B यत्तो° 7) Bb पुनरा 8) H Bb संवत्सरेंऽपि

सभ्यं तद्विराजमाप्तदन्नं वै विराडन्नं वावैतदापन्मध्याधिदेवने[1] राजन्यस्य जुहुयाद्वारुण्य[2] र्चा वरुणो वै देवानां राजा राज्यम[3]स्मा अवरुन्द्धे हिरण्यं निधाय जुहोत्यभिमन्त्र्येव जुहोत्यायतनवत्यग्नौ ऽध्वर्युः स्याद्यदनायतने जुहुयाच्छतमस्मा अक्षान्प्रयच्छेत्तान्विचिनुयाच्छतायुर्वै[4] पुरुषः शतवीर्या आयुरेव वीर्यमाप्नोति ग्रामस्य तद्दहः सभायां दीव्येयुस्तस्याः पल्प्यपि न हिंस्युस्ता सभासद्भ्य उपहरेत्तया यन्मृह्णीयात्तद्ब्राह्मणेभ्यो देयं तत्सभ्यमन्नमवरुन्द्धे ॥११॥ Vgl Kath 8, 7 u 12, Kap S 7, 3 u 4

यस्या रात्र्याः प्रातरग्निमाधास्यमानः स्यात्तां रात्रीं चतुःशरावमोदनं पक्त्वा ब्राह्मणेभ्यो जीवतण्डुलमिवोपहरेददितिर्वै प्रजाकामौदनमपचत्सोच्छिष्टमाश्नात्तस्या धाता चार्यमा चाजायेतां सापरमपचत्सोच्छिष्टमाश्नात्तस्या मित्रश्च वरुणश्चाजायेतां सापरमपचत्सोच्छिष्टमाश्नात्तस्या अंशश्च भगश्चाजायेतां सापरमपचत्सैक्षतोच्छिष्टं मे ऽश्नत्या द्वौ द्वौ जायेते इतो नूनं मे श्रेयः स्याद्यत्पुरस्तादश्नीयामिति सा पुरस्तादश्नत्योपाहरत्ता अन्तरेव गर्भः[5] संन्तावदतामावमिदं भविष्यावो यदादित्या इति तयोरादित्या निर्हन्तास्मैहुस्तौ अंशश्च भगश्च निरहतां तस्मादेतौ यज्ञेन यजन्ते

---

1) So M 1, in M 2, H u Bb मध्याधिदेवने, cf Kap S 7, 4, wo das Wort मध्याधिदेवन *in verschiedenen Casus auftritt* 2) So M 1, in M 2, H *u Bb* वारुण्ये 3) So M 2, wohl auch H, Bb राज्यम॰, M 1 राज्यम॰ 4) So M 1 u 2, aber H u Bb चिद्विव्येयुस्, B चिद्विव्येयुस्, im Anschluss an die letzten drei Mss lage es *nahe* विदीव्येयुस् *zu vermuthen, um so mehr, als* Kap S 7, 4 *von der Kuh gesagt* wird गा (cod गो) घ्नति ता विदीव्यन्ति ता सभासद्भ्य उपहरति, indess wird die Richtigkeit der Lesung in M 1 u 2 glänzend dadurch bewiesen, dass der ganze Satz wörtlich so citirt wird von Patanjali im Mahabhâshya zu Pâ 2, 3, 60, desgl im Schol zu Pâ 2 3 60 Interessant ist es, dass Patanjali a a O unmittelbar vorher auch die vorhin angeführte Stelle der Kap S citirt, mit geringen Abweichungen गा घ्नन्ति गा प्रदीव्यन्ति गा सभासद्भ्य उपहरन्ति 5) So alle Mss

ऽश्वप्रासो ऽश्वस्य[1] भागधेयं जनं भगो ऽगच्छत्तस्मादाहुर्जनो गन्त३व्यस्तत्र भगेन संगच्छता इति । स वा इन्द्र ऊर्ध्व एवं प्राणम उदश्रयत । मृतमितरमाण्डमवापद्यत[3] । स वाव मार्ताण्डो यस्येमे मनुष्याः प्रजाः । सा वा अदितिरादित्याननुपाधावदस्त्वेव म इदं । मा म[4] इदं मोघं[5] परापप्तदिति[6] । ते ऽब्रुवन्नैषो३पो ऽस्माकमेव ब्रवातै[7] । न नो ऽतिमन्याता[8] इति । स वाव विवस्वानादित्यो[9] यस्य मनुश्च वैवस्वतो यमश्च मनुरेवास्मिँल्लोके यमो ऽमुष्मिन्नेते वै देवयानान्पथो गोपाः ॥ १ ॥ यदादित्यास्त इयक्षमाणं प्रतिनुदन्ते यो वा एतेभ्यो[10] ऽप्रोच्याग्निमाधत्ते तमेते स्वर्गाल्लोकात्प्रतिनुदन्त । उच्छिष्टभागा वा आदित्या । यदुच्छिष्टे विवर्तयित्वा समिध आदधाति तदादित्येभ्यो ऽग्न्याधेयं प्राह । नैनं स्वर्गाल्लोकात्प्रतिनुदन्ते । संवत्सरमुत्सृजेताग्निमाधास्यमानो । नास्याग्निं गृहाद्धरेयुर्नान्यत आहरेयुः । संवत्सरे वृद्धा गर्भाः प्रजायन्ते । प्रजातमेनं वृद्धमाधत्ते । द्वादश रात्रीरुत्सृजेत । द्वादश वै रात्रयः संवत्सरस्य प्रतिमा । संवत्सरे वृद्धा गर्भाः प्रजायन्ते । प्रजातमेनं वृद्धमाधत्ते । तिस्र उत्सृजेत । त्रयो वा इमे लोका इमानेव लोकानाप्नोत्येकामुत्सृजेतैको वै प्रजापतिः । प्रजापतिमेवाप्नो-

---

1) So M 1 u 2, in H, Bb u B °प्रास 2) So schreibe ich, d h प्राणमान् । उदश्रयत ।, die Mss schwanken, M 2 प्राणामन् उश्रयत desgl. M 1 u Bl ohne Accent, H u Bb प्राणमसुदश्रयत desgl B, ohne Accent 3) So M 1 u Bl, ohne Accent, in M 2 म्रितं° H, Bb मित°, desgl B, ohne Accent 4) So meine Corr In den Mss ohne Accent, in M 2 eigentlich माम geschrieben, aber dann corrigirt in मम, alle andern Mss मम 5) So die Mss 6) So M 1 u Bl, ohne Accent, M 2 परापतप्रदिति, H u Bb परापतद्दिति desgl B, ohne Accent 7) M 1 u Bl ब्रुवाति 8) So M 2, die andern Mss तिमन्यता 9) So M 2, in den andern Mss विवस्वान° ohne Accent 10) So M 2 in H, Bb एतेभ्यो प्रोच्या°, in M 1 u Bl ohne Accent

ति पुरूरवा[1] वा ऐड उर्वशीमविन्दत देवीं तस्या आयुरजायत स देवान्त्स्वर्गं लोकं यऽत्तो ऽनूदैत्ते[2] ऽब्रुवन्त्सेदयं देवा इमः ३कार्यं मनुष्यो गमिष्यतीति सो ऽब्रवीद्देवा वै मे समानास्ते मा वक्ष्यन्ति किमयै देव्याः पुत्रो देवेभ्यो मातुर्भ्रातृभ्या[3] आहापीदं[4] त्वेवं मे किंचिदिति तस्मा अग्निमेष्त्रियां तऽन्वं प्रायच्छत्तामुत्सङ्गे ऽवधायाहरत्तामुत्सायामवादधात्सो ऽश्वत्थ आरोहो ऽभवद्यौषा[5] सा शमी तस्मादेतौ यज्ञावचरौ पुण्यजन्मानौ ऽहामित्रं वरुणं ब्रह्मचर्यमागच्छमवसन्तं तस्य जायां संभवन्तं पुरस्तादायन्तं प्रतिकशाय[6] मत्यङ् निरद्रवन्सो[7] ऽवेत्सर्वं वा इन्द्रियं नृम्णं रेतो निर्लुप्य हरतीति तदनुपराहाय निरलुम्पद्यद्रेता आसीत्सो ऽश्वत्थ आरोहो ऽभवद्यदुल्वं सा शमी तस्मादेतौ यज्ञावचरौ पुण्यजन्मानौ हि प्रजापतिः प्रजाः सृष्ट्वा रिरिचानो ऽमन्यत सो ऽश्वो भूत्वा संवत्सरं ऽन्यङ्[8] भूम्याः शिरः प्रतिनिधायातिष्ठत्[9] तस्याश्वत्थो मूर्ध्न उदभिनत्तदश्वत्थस्याश्वत्थत्वं तस्मादेष यज्ञावचरः प्राजापत्यो हि ॥ १२ ॥

Vgl Kāṭh 7, 15. 8, 10, Kap S 6, 5 7, 6, TBr 1, 1, 9

मनुर्वै प्रजाकामो ऽग्निमाधास्यमानो देवतायै देवताया अजुहोत्ततो मित्रावरुणयोराहुत्या पयस्युदतिष्ठत्तस्या घृतं पदोरक्षरत्तां मित्रावरुणा ऐत्तां अभ्युतामाहुत्या वै त्वमावयोरजनिष्ठा मनो-

1) M 2, H, Bb पुरूरवा, M 1 पुरूरवा, desgl B, ohne Accent, s oben 1, 2, 7 a A Die ganze Stelle findet sich auch MPaddh III, S 3a und dort steht पुरूरवा 2) M 2, H Bb यऽत्तो नुदैत्ते, desgl B ohne Accent, M 1 यऽतो नुदैत्ते 3) So corrigirt, in den Mss मातृ° ohne Accent 4) So die Mss, desgl MPaddh III, S 3a, (ohne Accent) 5) So corr, M 2 H u Bb यौषा, M 1 यौषा, desgl B, ohne Accent, u MPaddh III S 3a 6) So corrigirt, die Mss प्रतिचाय ebenso MPaddh III, S 3b (ohne Accent) 7) Bb सो 8) So corrigirt, M 1 u 2 ऽन्य, H, Bb, B एवं 9) So das Verb betont in M 1, H, Bb, in M 2 निधायातिष्ठत्

रत्नं त्वमसि' तं परेहीति' सा मनुमैत्सो ऽब्रवीदसुरा वा इमे पुण्यमन्या अग्निमादधते' तान्परेहीति' सा परैत्ते ऽमुमेया आदधतायेममयेमं' सा पुनरैत्तामपृछत' किमभ्यगन्निति' साब्रवीदमुमेवाय्या आधिपतायेममयेममिति' सो ऽब्रवीत्सकृद्वावासुराः श्रियो ऽन्तमगुः' परा तु भविष्यन्तीति' सो ऽब्रवीद्देवा वा इमे पुण्यमन्या अग्निमादधते' तान्परेहीति' सा परैत्त इममेया आदधतायामुमयेमं' सा पुनरैत्तामपृछत' किमभ्यगन्निति' साब्रवीदिममेवाया आधिपतायामुमयेममिति' सो ऽब्रवीत्सकृद्वाव देवाः सर्वेण साकं स्वर्गं लोकं समारुक्षन्नितः प्रदानात्तु यज्ञमुपजीविष्यन्तीति' यः सर्ववेदसं दास्यन्स्यात्स इममेया आदधीतायामुमयेमं' तद्यथैव देवाः सर्वेण साकं स्वर्गं लोकं समारोहन्नेवमेव यजमानः सर्वेण साकं स्वर्गं लोकं समारोहति य एवं विद्वानग्निमाधत्ते' सो ऽब्रवीदृषयो वा इमे पुण्यमन्या अग्निमादधते' तान्परेहीति' सा परैत्त इममेया आदधतायेममयामुं' सा पुनरैत्तामपृछत' किमभ्यगन्निति' साब्रवीदिममेवाया आधिपतायेममयामुमिति' सो ऽब्रवीदहं वा अग्न्याधेयं विदांचकार' सर्वेषु वा एषु लोकेष्वृषयः प्रत्यष्ठुरिति' प्रति प्रजया च पशुभिश्च तिष्ठति य एवं विद्वानग्निमाधत्ते' यदमुमाधायेममादध्यादप तदादध्याद्यद्वाविममाधायामुमादध्यादप तदादध्याद्यदिममेवाधायायेममयामुं' तथा समृद्धा आधीयते' प्राचीनप्रवण आधेयस्तथा समृद्धा आधीयते' प्राचीनं मध्यमादङ्गाराधेयस्तथा

1) So H u Bb, in M 1 u 2 प्रद्राना॰ ohne Accent 2) So M 1 u 2, vgl unten 3, 8 3, Kâty Çr 5, 1, 21, in H u Bb ॰प्रवण B ॰प्रविण

संमृद्धा आधीयते'र्या वै सा प्रफर्व्यासीत्सा गौरभवत्सैडा सा मानवी घृतंपदी मैत्रावरुणी ॥ १३ ॥

Vgl Kâth 8, 4, Kap S 6, 9, TBr 1, 1, 4

॥ इति प्रथमकाण्डे आधानं नाम षष्ठः प्रपाठकः ॥

---

यत्त्वा क्रुद्धः परोवप मन्युना सुमनस्तर ।
सुकल्पमग्ने तत्तव पुनस्त्वोद्दीपयामसि ॥
यत्ते मन्युपरोप्तस्य पृथिवीमनुदध्वसे[1] ।
आदित्या विश्वे तद्देवा वसवः पुनराभरन् ॥
यत्ते भामेन विचकारानीशानो[2] हृदस्परि ।
पुनस्तदिन्द्रश्चाग्निश्च[3] वसवः समचीक्लृपन् ॥
पुनस्त्वादित्या रुद्रा वसवः समिन्धतां पुनर्ब्रह्माणो वसुधीते[4] अग्ने ।
घृतेन त्वं तन्वं वर्धयस्व रायस्पोषा यजमानं सचन्ताम् ॥

---

1) So M 1 u 2, P अनुदध्वस इत्यनु दध्वसे।, dagegen H u Bb °मनु दध्वसे wie TS 1, 5, 3, 2 2) P अनीशान। H u Bb °रानीशानो 3) So M 1, P तत्। , aber M 2 त्वादि°, H, Bb u B त्वादि° 4) So M 1 u 2 H, Bb u B वसु धीयते मे, P वसुधीत इति वसु धीते। अग्ने।, Kap S वसुधीतमग्ने, VS 12, 41, TS 4, 2, 3, 4 वसुनीथ यज्ञ .

चयस्ति॰ शतंन्तवो यं॰[1] वितन्वत इमं च यज्ञं॰ सुधया[2] ददन्ते ।
तेभिच्छिद्रमपिदध्मो यदत्र स्वाहा यज्ञो अप्येतु देवान्[3] ॥
मनो ज्योतिर्जुषतामाज्यस्य[4] विच्छिन्नं॰ यज्ञं॰ समिमं दधातु ।
इमं॰ यज्ञं॰ समतन्तुं ततं[5] ना आ देवा यन्तु सुमनस्यमानाः ॥
बृहस्पतिर्नो हविषा घृतेन विच्छिन्नं॰ यज्ञं॰ समिमं दधातु ।
या इष्टा उषसो याश्च याऽज्यास्ताः संदधामि मनसा घृतेन ॥
अग्ने[6] ऽभ्यावर्तिन्नभि मावर्तस्वायुषा[7] वर्चसा प्रजया धनेन सन्या मेधया रय्या पोषेण ॥
अग्ने अङ्गिरः शतं ते सन्त्वावृतः सहस्रं त उपावृतः[8] ।
अधा पोषस्य पोषेण पुनर्नो नष्टमाकृधि पुनर्नो रयिमाकृधि ॥
पुनरूर्जा निवर्तस्व पुनरग्न इषायुषा[9] ।
पुनर्नः पाह्यंहसः ॥

---

1) So die Mss P यं । , aber Kath 34, 19 याश्चितन्वत TS 1, 5 10 4 ये वितत्निरे 2) So M 1, 2 u P, Bb सुधया, H सुधया desgl B ohne Accent, Kath 34, 19 इम यज्ञ॰ स्वधया ये ददते, in Kap S fehlt der Vers Vgl noch 1, 8, 9 3) P देवांमा । 4) M 2 ॰माज्यस्य 5) So M 1 u 2, B ततता, H, Bb ततता (ohne Accent), P ततंता । (der Accent nicht ganz sicher) musste wohl ततं । नः । lauten, Kath 34, 19 समततं तन्न आ॰ 6) P अग्ने । अभ्यावर्तिन्नित्यभि आवर्तिन् । 7) P मा । वर्तस्व ।, müsste aber मा । आ । वर्तस्व lauten 8) P उपावृत इत्युप आवृत । 9) P इषा । आयुषा ।

सहं रय्या निवर्तस्वाग्ने पिन्वस्व धारया ।
विश्वप्स्न्या विश्वतस्परि ॥

सलिलः[1] संलिगः[2] संगरस्ते न आदित्या हविषो जुषाणा व्यन्तु स्वाहा' केतः सुकेतः संकेतस्ते[3] न आदित्या हविषो जुषाणा व्यन्तु स्वाहा' देवजूते विवस्वन्नादित्य ते नो देवाः सत्यां देवहूतिं देवेभ्या सुवध्वमादित्येभ्यः स्वाहा ॥ १ ॥

Vgl. 1, 7 1 5 — TS 1, 5, 3 (punarâdheyam); 1, 5, 10, 4, 2, 1, 2 3, 4, 2, 3 4, Kâṭh. 8, 14 31, 19, Kap S 8, 2, VS 12 44 2, 13 12, 7—10

अमेवै भागः पुनराधेयमेतं॰ वै भागं प्रेप्सन्त्यूर्धयति' यद्यादधानो मन्येत' वि स्यां ऋध्यता[4]' इत्युत्साद्य पुनरादधीत' यमेव भागं प्रेप्सन्न्यर्धयति तं प्राप्यार्धयत्येव' सर्वमेवाग्नये क्रियते' यत्किंच सर्वमेवाग्नये भागं प्रदाय सर्वामृद्धिमृध्नोति' न संभाराः संभृत्या' न यजुः कर्तवा' इत्याहुः' संभृतसंभारो ऽह्येष कृतयजुस्तदाहुः' संभृत्या एव संभाराः' काउयै॰ यजुरिति' पुनरुत्स्यूतं॰ वासो देयं पुनर्णवो[5] रथः पुनरुत्सृष्टो ऽनड्वानेतानि वै पुनराधेयस्य रूपाणि' रूपाण्येवास्याप्नोवरुन्द्धे' ऽग्निर्वा उत्सीदन्नपं ओषधीरभ्युत्सीदति' दर्भा वा आपा ओषधयो' यद्दर्भा उपोलपा भवन्त्यद्भ्य एवैनमोषधीभ्यो ऽध्याप्नावरुन्द्धे' देवा असुरैर्विजयमुपयन्तो ऽग्नौ प्रियास्तन्वः संन्यदधत' यन्नो जयेयुरिमा अभ्युपधावेम' यद्यु जयेमेमा अभ्युपावर्तेमहीति' ता

---

1) So M 1, P, desgl B, ohne Accent, Kath 8, 14, Kap S 8, 2, dagegen M 2, H u Bb सलीलं, vgl unten 1, 7, 5 2) So M 1, desgl B, ohne Accent, Kâth und Kap S, die andern Mss संलीग s 1 7, 5 3) M 2 सकेतस्, vgl aber auch TS 1, 5, 3, 3 4) So die Mss vgl oben 1, 5, 4 सा ऋध्नुत, Kath 8, 15 ऋध्यते स्या इति पुनरादधीत, Kap S 8, 3 corrupt विधृध्यते ध्यखेति 5) So durch Corrector in M 2, die andern Mss पुनर्नवो, vgl 1, 5 6 1, 8, 4

देवा जित्वान्वैछन्त्सर्वेषां नः सहेति 'ऽसौ ऽग्निरब्रवीद्य एवं मां महेवत्यु आदधातै स एताभिस्तनूभिः संभवादिति 'तं देवा आदधत[1] तं एताभिस्तनूभिः समभवन्पशवो वै देवानां प्रियास्तन्वः 'पशुभिरेव समभव॰स्तद्य एव॰ विद्वान्पुनराधेयमाधत्त एताभिरेवास्य तनूभिः संभवति 'पशवो वै देवानां प्रियास्तन्वः 'पशुभिरेव संभवति' मनुः पुष्टिकामा आधत्त 'स इमान्पोषान्पुष्यत्तेन ऋद्धं 'त्वष्टा पशुकामा आधत्त 'त इमे त्वाष्ट्राः पशवः प्राजायन्त 'तेन ऋद्धं 'प्रजापतिः प्रजाकामा आधत्त 'ता इमाः प्रजाः प्राजापत्याः प्राजायन्त 'तेन ऋद्ध॰ 'यो वै तमया आधत्त 'स तेन वसुना समभवत्तत्पुनर्वसोः पुनर्वसुत्वं 'तस्मात्पुनर्वसा आधेयः 'पुनर्हि स तेन वसुना समभवद्द्यौ वै तमाधत्ताभीत्सि[2] तस्मादनुराधास्वाधेया' ऋद्ध्या 'ऋध्नोत्येवाथो मिथुनत्वाय ॥ २ ॥

Vgl TS 1, 5, 1 u 2, Kaṭh 8, 15, Kap S 8, 3, Mān Çr 1, 6, 5

अग्निर्वा उत्सीदन्त्संवत्सरमभ्युत्सीदति 'सप्तदश सामिधेनीः कार्याः 'पञ्च ऋतवो द्वादश मासा 'एष संवत्सरः 'संवत्सरादेवैनमध्याप्त्वावरुन्द्धे 'तदाहुः 'पञ्चदश सामिधेनीः कार्या न सप्तदशेत्येतद्वै संवत्सरस्य संक्रमणतममेतेनाशिष्टमाप्यते[4] 'पञ्चदश सामिधेनीः पञ्चदशार्धमासस्य रात्रयस्ताभिरेव ता आप्यन्ते 'यावन्ति वै सामिधेनीनामक्षराणि तावन्ति संवत्सरस्याहानि 'तैरेव[5] तान्याप्यन्ते' ऽग्निर्वा उत्सीदन्त्संवत्सरमभ्युत्सीदति 'षड्वा ऋतवः संवत्सरस्ते-

---

1) So M 1 u 2, H u Bb आधत्त  2) So M 2 H u Bb, M 1 °त्साधत्ता°
3) So M 2, Bb und wohl auch M 1 in H B °दमूरा°  4) M 2 संक्रमणतममे°, Kap S 8 4 संक्रमणतरम°  5) So M 1 u 2 in H Bb u B तैस्तैरेव

स्यात्षड्विभक्तयः संवत्सरो वा अग्निर्वैश्वानरो यत्षड्विभक्तयः संवत्सरादेवैनमध्याप्त्वावरुन्द्धे ऽथ यदग्निर्बहुधा विह्रियते[1] इमान्योषान्पुषोय तस्मादग्निरेतावतीर्विभक्तीरानशे[2] नान्या देवतायै यद् द्वादशाः सतीश्चतुरष्टाराः क्रियन्ते[3] ऽऽचतुरं हि पशवो द्वन्द्वं मिथुनमृतवो वै प्रयाजा अन्नमृतवो यत्प्रयाजाननन्तरियादन्नमन्तरियाद्यज्ञमुखं वै प्रयाजा यत्प्रयाजाननन्तरियाद्यज्ञमुखमन्तरियात्तेद्यस्योत्संतस्योपरिष्टात्प्रयाजानां विभक्तीः[6] कुर्याद्वीर्यं वै प्रयाजा वीर्यं विभक्तयो वीर्यादेवाधि वषट्करोति नार्जगृद्धिमभिक्रामति नानाग्नेयं क्रियतेऽथ कस्मात्सह विभक्तयः प्रयाजैरिति संवत्सरं प्रयाजाः परीज्यन्ते कस्मादाग्नेयं क्रियते तस्मान्नानाग्नेयं ॥ ३ ॥

Vgl TS 1, 5 2, Kaṭh 9, 1, Kap S 8, 4, Man Çr 1, 6, 5

पुनरूर्जा निवर्तस्व पुनरग्न इषायुषा ।
पुनर्नः पाह्यंहसः ॥

इति पुरस्तात्प्रयाजानां जुहुयात् ॥

सह रय्या निवर्तस्वाग्ने पिन्वस्व धारया ।
विश्वप्स्न्या विश्वतस्परि ॥

इत्युपरिष्टादनुयाजानां जुहुयादूर्जा वा एष पशुभिरुत्सीदन्नसहोत्सीदति पुनरूर्जा निवर्तस्वेति तदूर्जमेव पशून्पुनरवरुन्द्धेऽथो तानेव भागिनः करोत्यथो उभयत एव यज्ञस्याशिष आप्नोति नानाग्नेयं क्रियतेऽथ कस्मादाज्यभागा इज्येते इति चक्षुषी वा एते

---

1) So corrigirt, M 1, H u Bb विह्रीयत, M 2 विहीयत, B विदीयत, cf Kap S 8, 4 यथा इदमपि बहुधा विहरति 2) So M 2 (desgl Kaṭh, Kap S), H, Bb u B विभक्तीर॰, M 1 विभक्तिर॰ vgl weiter unten 3) Die Mss क्रीयन्त 4) Die Mss ॰न्तरीयाद्यज्ञमन्तरीयाद॰ (Kaṭh hat die correcte Form) 5) Die Mss das erste Mal ॰न्तरीयाद॰, das zweite Mal Bb correct. 6) So M 1 (= Kaṭh), H, Bb, B विभक्तीः (Kap S विभक्तीः), M 2 विभक्तिः

यज्ञस्य यदाज्यभागौ यदाज्यभागा अन्तरियाच्चक्षुषी यज्ञस्यान्तरियादग्न आयूंषि पवसा इति सौमस्य लोके कुर्याद्यदाग्नेयी तेनाग्नेयी यत्पावमानी तेन सौमी नानाग्नेयं क्रियते न सौममन्तर्यन्त्यग्निर्मूर्धा दिवः ककुदि ति प्रजाकामो वा पशुकामो वा सौमस्य लोके कुर्याद्यन्मिथुना तेन प्रजननवती[1] यद्वृत्रस्वती तेन सौमी यज्ञेन वा एष व्यृध्यते ऽयो ऽग्निमुत्सादयते पाङ्क्तो यज्ञो यत्पञ्चकपालो यज्ञमेव पुनरालभते ऽष्टाकपालः कार्यो गायत्रो ऽह्यग्निर्गायत्रछन्दा आग्नेयं वा एतत्क्रियते यत्पुनराधेयं तस्मादष्टाकपालस्तन्न सूक्ष्यं पञ्चकपाल एवं कार्यः पञ्चमोह्यो अध्यृतोः[2] षष्ठ ऋतुरभवत्समानमेतद्यत्पञ्चमश्च ऋतुः षष्ठश्च यत्पञ्चकपालः संवत्सरादेवेनमध्याप्नावरुन्धे प्रजननं वा ऋतवो ऽग्निः प्रजनयिता यत्पञ्चकपालः प्रजननादेवैनं प्रजनयिता प्रजनयति ॥ ४ ॥

Vgl. 1, 7, 1 — TS 1, 5, 2, Kâṭh 9, 1—3, Kap S 8, 4 u 5

वीरहा वा एष देवानां ऽयो ऽग्निमुत्सादयते शतंदायो वीरो यदेताः शताक्षराः पङ्क्तयो भवन्ति वीरं वावैतद्देवानामवदयते ऽन्यस्मै वै कमाधेयमन्यस्मै पुनराधेयं न वै तदाधेयेन स्पृणोति यस्मै कं पुनराधेयं पुनराधेयेन वाव तत्स्पृणोति जरा वै देवहितमायुरेतावतीर्हि समा एति यदेताः शताक्षराः पङ्क्तयो भवन्ति यावदेवायुर्वीऽर्यं तदाप्नोति तत्स्पृणोति तदवरुन्द्ध आयुषा वा एष वीर्येण व्यृध्यते ऽयो ऽग्निमुत्सादयत आयुर्वीऽर्यं हिरण्यं यद्धिरण्यं ददात्यायुषैवैनं वीर्येण समर्धयति शतमानं भवति शता-

---

1) So corrigirt; M 1 प्रजननवति, M 2 प्रजंनन्वती, H u Bb प्रजांमनवती, B प्रजाननवती, Kap S 8, 5 hat das Richtige 2) So corrigirt, M 1 u 2 अपृतो, H u Bb अंपृतौ, B अपृतोः, Kaṭh 9, 3 अध्युतो

युवं पुरुषः शतवीर्य आयुरेव वीर्यमाप्नोत्यादित्या वा इत उत्तमाः स्वर्गं लोकमायंस्ते यत्तृप्यन्तितःप्रदानाद्धि[1] देवा यज्ञमुपजीवन्ति तं वा एतं पुनरादधत तं आभुवन्नादित्या वा अस्मिंल्लोक आद्या आदित्या अमुष्मिन्पशवो ऽस्मिन्नृतवो ऽमुष्मिंस्तद्य एवं विद्वान्पुनराधेयमाधत्त उभयोरेव लोकयोर्ऋध्नोत्यस्मिंश्चामुष्मिंश्च सलिलः[2] सलिगः[3] सगरस्ते न आदित्या हविषो जुषाणा व्यन्तु स्वाहा केतः सुकेतः संकेतस्ते[4] न आदित्या हविषो जुषाणा व्यन्तु स्वाहा देवजूते विवस्वन्नादित्य तं नो देवाः सत्यां देवहूतिं[5] देवेष्वासुवध्वमादित्येभ्यः स्वाहेत्येतैर्वै ते तं पुनरादधत तं आर्ध्नुवंस्तद्य एतै पुनराधत्ते ऽथ ऋध्नोत्यादित्या हि पुनराधेयम् ॥ ५ ॥

Vgl TS 1, 5, 2; 4, 4; Kâth. 9, 2 u. 3; Kap. S 8, 5 u 6.

॥ इति प्रथमकाण्डे पुनराधानं नाम सप्तमः प्रपाठकः ॥

---

प्रजापतिः प्रजा असृजत स वा अग्निमेवाग्रे मूर्धतो ऽसृजत स[6] यतो ऽग्निमसृजत तत्पर्यमार्ट्[7] ततो लोहितमवाहरत्तन्न्यमार्ट्[8] तत उदुम्बरः समभवत्तस्मादुदुम्बरः प्राजापत्यस्तस्माल्लोहितं फलं प-

---

1) So M 2, H u Bb प्रदानात्तर्हि, desgl B, ohne Accent, M 1 °न्ति: प्रदानाद्धि । vgl TS 3, 2, 9, 7  2) H u Bb सलीर्लः, s oben 1, 7, 1 — Kâṭh. u Kap S सलीगः, Kap. S 8, 6 संलीगः, . सलिल.  3) So M 1, M 2 सलिगः, H, Bb u B सलीग., Kap. S 8, 6 संलीगः, Kâth 9, 3 सलिग  4) H u Bb संकेतस्, vgl oben 1, 7, 1  5) H u Bb देवहूति  6) fehlt in H, Bb  7) H u Bb पर्यमाट्  8) H u Bb तन्यमाट्

च्यत' सो ऽस्मात्सृष्टः पराङ्भागधेयमिच्छमानः' स तदेव नाविन्दत्प्रजापतिर्यदहोष्यत्स स्वं चक्षुरादायाजुहोत्॥ अग्निर्ज्योतिर्ज्योतिरग्निः स्वाहा॥ इति तद्वा अदश्चक्षुर्मन्यन्ते यदसा आदित्यो 'मुं वा एतदस्मिञ्जुह्वतो मन्यन्ते' सत्यं वै चक्षुः' सत्येनाग्निहोत्रं जुहोति य एवं विद्वाञ्जुहोति' भविष्णुः सत्यं भवति य एवं वेद' कस्मै कमग्निहोत्रं हूयता' इति ब्रह्मवादिनो वदन्त्यग्नये वा एतद्धृत्यै गुप्त्यै हूयते' यत्सायं जुहोति रात्र्यै[2] तेन दाधार' यत्प्रातरह्ने तेनोभौ सर्वान्यज्ञान्संस्थापयन्त्यथ कस्मादेतद्देवाग्निहोत्रमुच्यता' इति ब्रह्मवादिनो वदन्ति' होत्रा वै देवेभ्यो ऽपाक्रामन्नग्निहोत्रे भागधेयमिच्छमाना' यत्॥ अग्निहोत्रम्॥ इत्याह तेन होत्रा आभजति' तेनैना भागिनीः करोत्येषा वा अग्ने ऽग्रा आहुतिरहूयत' तदग्निहोत्रस्याग्निहोत्रत्वं' सो ऽस्मात्सृष्टः पराङ्भागधेयमिच्छमानः' स तदेव नाविन्दत्प्रजापतिर्यदहोष्यत्स स्वा वागभ्यवदज्जुहुधीति' स इत एवोन्मृज्याजुहोत्॥ स्वाहा॥ इति स्वा ह्येन[3] वागभ्यवदत्तत्स्वाहाकारस्य जन्म' तस्मादग्निहोत्रे स्वाहाकारस्तस्माल्ललाटे च पाण्योश्च लोम नास्त्यतो हि स तदादायाजुहोत्तस्माद्यस्य दक्षिणतः केशा उन्मृष्टास्तमाहुर्ज्येष्ठलक्ष्मीति[1] प्रजापतिर्ह्येतदग्रे ज्येष्ठ उदमृष्टानेन संमिता सुक्षाउर्योनेन वा अग्ने ऽग्रा आहुतिरहूयत' तस्या आहुत्याः पुरुषो ऽसृज्यत' द्वितीयामजुहोत्ततो ऽश्वो ऽसृज्यत' तस्मादश्व उभयाद-[5]

---

1) S m Abhdlg Ztschr. DMG XXXIII S 199, Patañjali, Mahâbh zu Pâ 3, 1, 87. — Kâṭh. 6, 1, s Monatsber d Kgl Akad d Wiss zu Berlin, Juli 1879, S 693 flg

2) M 2 रात्रिये 3) Die Mss ह्येन॰ 4) S TBr 2, 1, 2, 2 5) So M 1 u 2, m II, Bb u B उभयंदग्ग॰, diese Form als ved Adj angeführt Kâç zu Pâ 5, 4, 142; bisher unbelegt

न्तर्हितो हि पुरुषादसृज्यत तस्मादेनं प्रत्यञ्चं तिष्ठन्तं मन्यन्ते ऽश्वो नू[1] पुरुषा[2] इति तृतीयामजुहोत्ततो गौरसृज्यत चतुर्थीमजुहोत्ततो ऽविरसृज्यत पञ्चमीमजुहोत्ततो ऽजासृज्यत षष्ठीमजुहोत्ततो यवो ऽसृज्यत सप्तमीमजुहोत्ततो व्रीहिरसृज्यत ते सप्त ग्राम्याः पशवो ऽसृज्यन्त तानेवावरुन्द्धे य एवं विद्वानग्निहोत्रं जुहोति ॥ १ ॥

Vgl. Kâṭh. 6, 1. 2; Kap S. 4, 1; TBr. 2, 1, 2.

अष्टमीमजुहोत्ततो वसन्तो ऽसृज्यत नवमीमजुहोत्ततो ग्रीष्मो ऽसृज्यत दशमीमजुहोत्ततो वर्षा असृज्यन्तैकादशीमजुहोत्ततः शरदसृज्यत द्वादशीमजुहोत्ततो हेमन्तो ऽसृज्यत त्रयोदश्याहुतिरासीदथ शिशिरमसृज्यत तस्मादेतदृतूनामशान्तं क्रूरमहुताद्धि समभवदहुतादसृज्यत[3] तदाहुर्ब्रह्मवादिन ऋतवः पूर्वे ऽसृज्यन्ता३[4] पशवा३[5] इत्यृतव उत पशवा इति ब्रूयादुभये ३ह्येते सहासृज्यन्त स वा एनमित एव पुनः प्राविशदेतद्वा अभिधानं हस्तस्य यत्पाणिस्तस्मादेतौ[6] हस्तस्याभिनितमा[7] विदहति[8] यद्धन्यमानो[9] हस्तौ प्रतिप्रसारयत्यग्नौ वा एतन्मन्थनमिच्छते[10] ऽग्निं वै पशवः

---

1) So M 1 u. 2; in H, Bb u. B नु 2) Vgl. Kâṭh. 6, 2 तस्मात्पुरुषस्याश्व नत्तं प्रत्यंचो न सु विज्ञायेते इव 3) So M 2; in H u. Bb °दसृ° ohne Accent (M 1 u. Bl) 4) So M 1; in H, Bb u. B ohne die ३; M 2 सृज्यंताः 5) So M 2; M 1 u. Bl. पशवा३; H u. Bb पशंवा; vgl. 1, 6, 10 u. E. 6) So M 2, d. h. वा । एतः ।; cf. das vorhergehende प्राविशत्; in M 1 u. Bl. ohne Accent तस्मादेतो; H u. Bb तस्मादेतो; desgl. B, ohne Accent. — Kâṭh. 6, 2; Kap. S. 4, 1 steht statt dieses Passus तस्माद्धस्ताभ्यामभिमथ्यमानो जायते 7) So meine Correctur; die Mss. नतमा°; vgl. aber नततराम् 8) So M 1 u. 2; in H, Bb u. B वदहत 9) So meine Correctur im Anschluss an Kap. S 4, 1 तस्माद्धन्यमानो हस्तौ प्रतप्य गृह्णात्यपावेव तस्मादग्निमिच्छते; die Mss. schwanken; M 1 °मानो; M 2 °माने; H, Bb u. B °मानो; auch Kâṭh. 6, 2 °मानो हस्तौ प्रगृह्णाति 10) Kâṭh. चाग्निमिच्छते

प्रविशन्त्यग्निः पशून् प्र ह वा एनं पशवो विशन्ति प्र स पशून्य एवं वेदैतद्ध स्म वा आह नारदो यत्र गाः शयाना निजानाति मृतामेनाममविद्वान्मन्यते ऽग्निं ह्येवैताः प्रविशन्त्यग्निरिताःस्तस्मात्सर्वानृतून्पशवो ऽग्निमभिसर्पन्ति न ह्येतं ऋत ऽग्नेर्यज्जातः पशून्नविन्दत तज्जातवेदसो जातवेदस्त्वं तामप्सु प्रासिञ्चत्सापो ऽन्वदहत्ता अग्नये वज्रो ऽभवंस्तस्माद्यद्वीप्यपि प्रोक्षतामिवाभि न प्रोक्ष्यो[1] यदभिप्रोक्षेद्वज्रेण यज्ञेन यजेत[2] ता वै प्रजापतिरन्वैच्छत्तामप्स्वन्वविन्दत्तामोषधीषु न्यमार्ट्[3] तस्मादोषधयो ऽनभ्यक्ता रेभन्त्योषधीभ्यः पशवः पशुभ्यो मनुष्या अनभ्यक्तो ह रेभते य एवं वेद तद्यो वसन्ताशिशिरे[4] कक्षः स उपाधेय एतद्वै तदग्नेः प्रियं धामैषा वाव साहुतिः थायत्यग्नेरेवैतया प्रियं धामोपैत्यथो पशुमान्भवत्यथो आत्मानमेवैतया यजमानः पुनीते सह वा एता आस्तामग्निश्च सूर्यश्च समाने योना अयसि लोहिते स आदित्य ऊर्ध्व उदद्रवत्तस्य रेतः परापतत्तदग्निर्योनिनोपागृह्णात्तदेनं व्यदहत्तस्माद्यो ऽचपु[5] प्रतिधुक्क्षीरं विदहति तस्मादेतज्जुह्वति पशूनां वा एतत्पयो यद्व्रीहियवौ तस्मादेतज्जुह्वति नातिशृतं कार्यं रेतः शोषयेद्यद्विष्यन्देतोन्मादुको ऽस्य प्रजायामाजायेतामुष्य वा एतदादित्यस्य रेतो हूयते ऽमेध्यमशृतं समुदन्तं होतव्यं तद्धि शृतं मेध्यं मिथुनं प्रजननिष्णु ॥ २ ॥

Vgl Kāṭh. 6, 2 3; Kap S. 4, 1 2

---

1) So meine Correctur, M 2 प्रोक्षो, M 1 प्रोक्ष्यो; B प्रोक्षे, H u Bb प्रोक्षेत् 2) So M 1 u 2, in H, Bb u B यजते 3) H न्यमाट्, Bb न्यमार्ट् 4) So M 1 u 2; in H, Bb u B वसतः शिशिरे 5) So M 2, desgl M 1 u Bl, ohne Accent; H चपुः, so B, ohne Accent, Bb चयुः, vgl Kap S 4 2 तस्मादचप्वयसाच प्रतिधुक्षयति (cod °चपद°); fast ebenso Kaṭh 6, 3 चचप्वयःपाच (cod च:) प्रतिधुक्षयति

स्थाल्यां दुहन्त्यनया वा एतदुपसीदन्ति नहीमामितो नेतः स्कन्दत्यस्कन्नत्वाया[1]यस्कृती[2] भवत्यूर्ध्वकपाला सदेवत्वाय सा हि सदेवासु३र्ये[3] वा एतस्माच्च यत्कुलालकृतं चक्रवृत्तं यत्स्कन्देत्तदपो निनयेदापो वै शान्तिरापो निष्कृतिरापो भेषजं यत्र वा एता अस्या उपयन्ति तंत्वंशस्ततर ओषधयो जायन्ते वंहीयसीर्यदि दुह्यमानावभिन्द्यादन्यया स्थाल्यां निर्णिज्य दोह्या यज्ञो हि यज्ञस्य प्रायश्चित्तिर्यद्यधिश्रित स्कन्देद्यदुद्वास्यमानं यदुद्वासितं यदुन्नीयमानं यदुन्नीतं यदि पुरः पराहृतं[4] होमाय पुनरवनीयान्याभिर्दुह्या यज्ञो हि यज्ञस्य प्रायश्चित्तिर्वारुणीमृचमनूच्य वारुण्या होत३व्यं वरुणो वा एतद्यज्ञस्य गृह्णाति यदार्छन्ति निष्कृतिर्वै षा प्रायश्चित्तिरप्रतिषेक्यं स्यात्तेजस्कामस्य ब्रह्मवर्चसकामस्याथो तुस्तूर्षमाणस्याथो यः कामयेत वीरो म आजायेतेत्यप्रतिषिक्तो वै घर्मस्तेजो ब्रह्मवर्चसं तेजस्वी ब्रह्मवर्चसी भवति स्तृणुते यं तुस्तूर्षेत आ हास्य वीरो जायत आज्येन होत३व्यं यस्याप्रतिषेक्यं स्यादेतद्वा अप्रतिषिक्तं न तु स्कन्नस्य प्रायश्चित्तिरस्त्यथो न पशुमानिव भवति पशूनां वा एतत्पयः प्रवृज्यते शुचं पशुषु दधाति तेजो ऽशान्तं पशून्निर्दहति तस्मात्प्रतिषेक्यमेव स्याद्यदद्भिः प्रतिषिञ्चेद्वरो विनयेद्गोदोहसंनेजनेन प्रतिषिच्यं[5] तद्धि नापो न पयस्तदाहुः स्क-

---

1) So M 2 u. 1 (n. Bl.), in H, Bb u. B ॰यस्कन्दत्याय॰  2) S. m. Abhdlg. Ztschr. DMG. XXXIII, S. 198, Pâ. 4. 1, 30. Auch Mân. Çr. 1, 6, 1 कार्यकृत्वा दोहति; im Kâṭh. 6, 3, Kap. S. 4, 2 ist das Wort vermieden, durch अचक्रकृत ersetzt: यच्चक्रकृत तदसुर्यं यदचक्रकृत तद्देवपात्र (so Kap. S. und mit einigen unwesentlichen Fehlern auch Kâṭh.)  3) So M 1 u. 2, in H, Bb u. B ॰सुउर्य॰, vgl. oben 1, 6, 10, s. 3. Über s. Pâ. 8. 2. 100, beim Schol. der ganze Satz citirt.  4) B पराकृत॰  5) So M 1, die andern Mss. प्रतिषिच्य॰ सद्धि

न्दति वा एतर्हि वा एतद्दोहनात्पर्याक्रियते तर्हि स्कन्नमन्तर्हिता ३ह्यस्यां वनस्पतया इति तदद्भिरेव प्रतिषिच्य॰ स्तोकेनैकेन न हरो विनयति एवं पशूना॰ शमयति पशवो वै तेजो ब्रह्मवर्चसं मिथुन॰ वा आपश्च पयश्च मिथुनात्खलु वै प्रजाः पशवः प्रजायन्ते तन्मिथुनं तस्मादेवं मिथुनाद्यजमानः प्रजया च पशुभिश्च प्रजायत ओदनेन होत३व्य॰ यस्य प्रतिषे३क्य॰ स्यादेष हि प्रतिषिक्तः शान्तो मेध्यो मिथुनः प्रजनिष्णुः ॥ ३ ॥

Vgl Kath 6, 3, Kap S 4, 2; (TBr 2, 1, 3), Man Çr 1, 6, 1, 3, 2

प्रजापतिः प्रजा असृजत ता वै तपसैवासृजत स वै स वाचमेवायच्छत्तपो वा एष उपैति यो वाच॰ यच्छति सृष्टिः प्रजानामग्निहोत्रमुभयत एवं प्रजाः सृजत इतश्चामुतश्च निमुक्ते सूर्ये वाग्यन्तव्याथो दुह्यमानायामथो अधिश्रित उन्नीयमान एवं यन्त३व्यात्तद्वक्लृप्तमम् ॥ उद्गवः स्थ ॥ इत्यवेक्षेत ॥ उदहं प्रजया पशुभिर्भूयासम् ॥ इति प्रजायाः पशूना॰ सृष्ट्या अथो अ३भ्येवैनद्वारयति मेध्यत्वायाग्निहोत्रे वै दंपती[1] व्यभिचरेते पूर्वो यजमानस्य लोको ऽपरः पत्न्या यत्प्राचीनमुद्वासयेद्यजमानः प्रमीयेत यत्प्रतीचीनं पत्नी कं घर्ममभ्युदवीवसा इति ब्रह्मवादिनो वदन्त्युदीचीनमेवोद्वास्यमथाहृणी संजीयेतः सर्वमायुरितो नान्ति नीतश्चतुरुन्नयति चतुष्पदस्तेन पशूनवरुन्द्धे द्विर्जुहोति द्विपदस्तेन यं कामयेतानुज्येष्ठं प्रजया ऋध्नुयादिति तस्य पूर्णमग्रा उन्नयेदथ कनीयो ऽथ कनीयो ऽनुज्येष्ठं प्रजया ऋध्नोति तदाहुः कनीया॰स॰ वा एष यज्ञक्रतुमुपैति कनीयसीं प्रजां कनीयसः पशून्कनीयो ऽन्नाद्यं

1) Kap S 4, 3 जायापती, Kāṭh 6, 4 जायम्पती

पापीयान्भवति संमितमिवाग्रा उन्नयेदथ भूयो ऽथ भूयः पूर्णमुत्तमं यज्ञस्याभिक्रान्त्यै तदाहुर्ज्यायांसं वा एष यज्ञक्रतुमुपैति भूयसीं प्रजां भूयसः पशून्भूयो ऽन्नाद्यं वसीयान्भवत्यर्धुको ऽस्य पुत्रः कनिष्ठो भवतीति यदि कामयेत सर्वे सदृशाः स्युरिति सर्वान्समावदुन्नयेत्सर्वे ह सदृशा भवन्ति न पश्चादुपसादयेदपक्रान्तिः सा यज्ञस्य यत्रैवोन्नयेत्तत्सादयेत्प्रतरं वा यज्ञस्याभिक्रान्त्या अनुध्यायिनं वा एतदपरं करोति यदपरस्मिंस्तपन्ति पूर्वस्मिञ्जुह्वति समयाग्निं हरन्ति[1] तेनैवैनं प्रीणात्यथो अग्निहोत्रस्य वा एतत्पर्या चर्ममुपोदेवैनदपरस्माद्धि पूर्वं सृष्टं तमेतावत्यरमयंस्तस्मात्पुरोदृत्य जुहोति ॥ आयुर्मे यच्छ ॥ इति सादयत्यायुरेवास्मिन्यच्छ- वर्चो मे यच्छ ॥ इति सादयति वर्च एवास्मिन्यच्छत्योषधीर्वा इमा रुद्रा विषेणाञ्जंस्ताः पशवो नालिशन्त ते देवाः प्रजापतिमेवोपाधावन्स प्रजापतिरब्रवीद्वार्यं वृणै भागो मे ऽस्त्विति वृणीष्वेत्यब्रुवन्सो ऽब्रवीन्मह्येव३ त्येव समिदसदिति तस्मात्प्राजापत्यां समिद्धेष्वेषु हूस्यैषा वार्यवृता द्वे समिधौ का३र्ये द्वे ह्याहुती एकैव कार्यैको हि प्रजापतिरेकधा खलु वै समिद्ध उत बह्वीराहुतयो हूयन्ते ता अग्निनान्ववाकरोत्ता अस्वदयत्ताः पुनर्णवा[2] अजायन्तैतर्हि खलु वा अग्निहोत्रिणे दर्शपूर्णमासिने सर्वा ओषधयः स्वदन्ते यत्समिधमादधाति सर्वा एवास्मा ओषधीः स्वधयामकः[3] ॥ ४ ॥

Vgl Kāṭh 6 4 5, Kap S 4, 3 4, TBr 2, 1, 3 u 4, Mān Çr 1, 6, 1

भूर्भुवः स्वः ॥ इति पुरस्ताद्धोतावेदेतद्वै प्रत्यक्षमेतत्सत्यमेतदृतं न

1) M 2 हरति, vgl aber das Vorhergehende 2) So M 1, die andern Mss पुनर्णवा 3) So alle Mss.

वा एतस्माद्दृते यज्ञोऽस्ति तस्मादेवं वदितव्यम् ॥ अग्निर्ज्योतिर्ज्योतिरग्निः स्वाहा ॥ इति गर्भिण्या वाचा गर्भं दधाति मिथुनया वाचा मिथुनं प्रजनयति यद्वाचा च जुहोति यजुषा च तन्मिथुनं यत्तूष्णीं च जुहोति मनसा च तन्मिथुनं स्थाणुर्वै पूर्वाहुतिरितिहाय पूर्वामाहुतिमुत्तरा होतव्या स्थाणुमेवं छम्बट्करोत्युत्तराहुतिर्भूयो होतव्या यज्ञस्याभिक्रान्त्यै पशूनेवं पूर्वयाहुत्या स्पृणोति ब्रह्मवर्चसमुत्तरयाग्नेयी सायमाहुतिस्तया रेतः सिञ्चति तद्रेतः सिक्तं रात्र्यै गर्भे दधाति तत्सौर्या तः प्रजनयामकरिंय होतव्याय पराय पुनरवस्तात्प्रातरवस्ताद्धि नो प्रजातिः प्रजननं हि सौरी तन्न सूर्क्ष्ये पराप्येव होतव्यं यज्ञस्याभिक्रान्त्या उदद्दृहिशति ॥ अनाभो मृड धूर्ते नमस्ते अस्तु रुद्र मृड ॥ इत्येता वै रुद्रस्य तन्वः क्रूरा एतानि नामान्येताभिर्वा एष पशूञ्छमायते ता एवास्य भागधेयेन शमयत्यवाचीनं सायमेवमार्ष्टि तस्मात्सायमवाची मुष्वैत्यूर्ध्वं दिवोन्मार्ष्टि तस्मादूर्ध्वो दिवैति पराचीनमिव वा एतद्यदग्निहोत्रं यत्पुरस्ताद्याजुषं वदति धृत्या अनिर्भागाय यो वा अग्निहोत्रस्य वैश्वदेवं वेदाघातुक एनं पशुपतिर्भवत्यघातुकोऽस्य पशुपतिः पशूंल्भाङ्कासीनो जुहोति देवांस्तेन प्रीणाति हुत्वोञ्छिंषति पशूनेव यजमानायोञ्छिंषत्युदङ्ङुद्दिशति रुद्रं तेन निरवदयते दक्षिणतो निमार्ष्ट्योषधीषु तेन पितॄंश्च प्रीणाति प्राश्नाति मनुष्यांस्तेन प्रीणात्यङ्गुल्या प्राश्नाति यदस्याय न दतौ गमयेद्यद्दतौ गमये-

1) M 2 रात्रिये, so eigentlich auch M 1 aber corrigirt 2) So M 1 2 u P, (ebenso Kap S 4, 6) die andern Mss धूर्त्ते 3) So M 1 u 2 in H, Bb, B शमयते s 1, 8, 6 4) H Bb अनिर्भागाय 5) Von hier bis ऽस्य in H, Bb, B fehlend

त्सर्पा एनं घातुकाः स्युः सर्पानेवं शमयत्यहिंसायै ॥ पूषासि ॥ इति यजुर्वदेत्पशवो वै पूषा पशूनेवावरुन्द्धेऽशान्तो वा एषोऽप्रीतः पुरुषमेधं वा एष प्रतीक्षते यजमानमेव हव्यं यदग्निहोत्रहवणीं निष्टपत्यशान्तस्तेनाग्निहोत्रहवणीं प्रतप्य हस्तो ऽवधेयो[1] हस्तो वा प्रतप्याग्निहोत्रहवण्यामवधेयस्तेनैवैनं शमयति तेन प्रीणाति शान्त एनं प्रीतो न हिनस्तीत्यथ पर्यावर्तेत एवं हि यज्ञः पर्यावर्ततेऽथो अमुष्य वा एतदादित्यस्यावृतमनु पर्यावर्तते होतव्यं गार्हपत्या३न्न[3] होतव्या३मिति[4] मीमांसन्तेऽनुध्यायी वा एष रुक्षो होतव्यमेव ॥ अग्ने गृहपते परिषद्य[5] जुषस्व स्वाहा ॥ इति जुहुयात्तेनैवैनं शमयति तेन प्रीणात्यथो तेनैवैनमनुध्यायिनमरूक्षं करोत्यथ यत्पूर्वामाहुतिं[6] ... तेनैवैनं शमयति तेन प्रीणात्यथो तेनैवैनमनुध्यायिनमरूक्षं करोत्यथ यत्पूर्वामाहुतिं हुत्वोत्तरां होष्यन्प्रतीक्षते तेनैवैनं शमयति तेन प्रीणात्यथो तेनैवैनमनुध्यायिनमरूक्षं करोत्यथ यदेवास्य गृहं उपह्रियन्ते यदेनमस्मिन्नभिता आसीना याचन्ति तेनैवैनं शमयति तेन प्रीणात्यथो तेनैवैनमनुध्यायिनमरूक्षं करोति ॥ ५ ॥

Vgl Kāṭh 6, 5, Kap S 4, 4 6, TBr 2, 1, 4, Mān Çr 1, 6, 1

द्वे दुहन्त्यग्निहोत्राय ज्यायान्वा एकस्या दुग्धादग्निहोत्रिणो लोको यद्द्वे दुहन्ति ज्यायांसं वा एतं लोकं यजमानो ऽभिजयति मनुष्य वा इदं मनायी च मिथुनेन प्राजनयता[7][8] यत्स्याल्यां च दो-

1) So M 1, die andern Mss वार्धेयो 2) So M 1, desgl M 2, ohne Accent die andern Mss °मवार्धेयस् 3) So schreibe ich, M 1 गार्हपत्यां न, H, Bb गार्हपत्यान्न M 2, B ohne Accent °पत्यान्न, vgl oben 1 6, 10, unten 1, 8, 7 4) M 1 होतव्यामीति, H, Bb होतव्यामिति, M 2, B होतव्यामिति aber vgl 1, 6, 10 1, 8, 7 5) M 1 पर्षद्य 6) So M 2, M 1 एतं°, H Bb, B एतस्मो° 7) S m Abhdlg ZDMG XXVIII, S 197, Pa 4, 1, 38. 8) So M 1, M 2 प्रजनयता, B प्रजनयता°, H, Bb प्रजनयाता°

ह्नेन च दुहन्ति मिथुनादेव प्रजायते ॥ सजूर्जातवेदो दिव आ पृथिव्या जुषाणो अस्य[1] हविषो वीहि स्वाहा ॥ इति जुहुयादेषा वा अस्य जातवेदस्या तनूः क्रूरतया वा एष पशूञ्छमायते तामेवास्य भागधेयेन शमयति यदि तदिति शमायेत ॥ अग्ने दुःशीर्ततनो[2] जुषस्व स्वाहा ॥ इति जुहुयादेषा वा अस्य शृणती[3] तनूः क्रूरतया वा एष पशूञ्छमायते तामेवास्य भागधेयेन शमयति यदि तदिति शमायेत ॥ द्वादश रात्रीः सायंसायं जुहुयाद्द्वादश वै रात्रयः संवत्सरस्य प्रतिमा संवत्सरो वा अग्निर्वैश्वानरस्तमाहिताग्नयो दर्शपूर्णमासिन इन्धते तेषां वा ऋतव एव दारूणि येऽस्य विष्ठा अङ्गारास्ते मासा ये घोदिशास्तेऽर्धमासा अहोरात्राणि मुर्मुरा यत्सधूमं ज्योतिस्तद्वैश्वदेवं यल्लोहितं तद्वारुणं यत्सुवर्णं तद्बार्हस्पत्यं यन्न लोहितं न सुवर्णं तन्मैत्रं यदङ्गारेषु व्यवशान्तेषु लेलायद्वीव[4] भाति तद्देवानामा-ऽस्यमथो अमुष्य च वा एतदादित्यस्य तेजो मन्यन्तेऽथ तस्मात्तर्हि होतव्यं यऽद्धेवासन्नपिदधाति तद्धिनोत्योविवे नामैषाहुतिरविभूयं देवमनुष्येषु गच्छति य एवं वेद न समिदग्निहोतव्या अप्रतिष्ठिता साहुतिर्नो यथा वीवावसंवेदयता[5] सा तन्नैव होतव्यं यथाग्निं व्यवेयात्सा हि यता[6] सा प्रतिष्ठिता तस्मान्महानग्निहोत्रस्येध्मः कार्यो यो वै बहु ददिवान्बह्वीजानोऽग्निमुत्सादयते ऽरिष्टिर्वै तस्य तदीजानां वै सुकृतोऽमुं लोके नक्षन्ति ते वा

1) So P u H, in M 1, Bb ohne Accent, (in M 2 das ganze Blatt ohne Accent.) 2) P fehlerhaft दुःशीर्ततम इति दुःशीर्स तमः। 3) So M 1 u 2 (ohne Accent); in B शीणती, H u Bb शीर्णति 4) in H, Bb betont एधते 5) So M 1 u .H; Bb सेनाय धेव, so B, ohne Accent M 2 लेलाय विव, Kāṭh 6, 7 लेलायेव, Kap. S. 4, 6 लेलाएव (wie im Kāṭh zu corrigiren), s unten 2, 2, 3. 6) So M 1 (der Anfang corrigirt, eigentlich विवा॰) desgl M 2, ohne Accent; H, Bb u. B वीवाधर्सवे॰ 7) So M 1 u 2, Bb, in H ॰द्वयत्ता desgl B, ohne Accent. 8) H यत्ता; desgl B, ohne Accent

एते यन्नक्षत्राणि यदाहुर्ज्योतिरवापादि तारकावापादीति ते वा एते ऽवपद्यन्त आभ्यां स्थिते न इदं यथालोकं सचन्ते यदामुतः प्रच्यवन्ते ऽथ यो बहु ददिवान्बह्वीजानो ऽग्निहोत्रं जुहोति दर्शपूर्णमासौ यजते चातुर्मास्यैर्यजते बहूनि सत्राण्युपैति तस्य वा एतदक्षय्यमपरिमितं तिरो वा ईजानाद्यज्ञो भवति तदाभ्यामेवाग्निभ्यां दग्धव्यः स्वं वा एतदिष्टमन्वारोहत्यपरेण दग्धव्या३ः पूर्वेणा३ इति मीमांसन्त उभौ समाहृत्यान्तरा दग्धव्यस्तदवक्लृप्ततमं गृह्णीयान्नक्तमग्निमेसु३र्या वै रात्रिर्ज्योतिरेव तमस्तरति दिवा ह वा अस्मा अस्मिंल्लोके भवति प्रास्मा असौ लोको भाति य एवं वेद ॥ भूर्भुवः स्वः ॥ इति पुरस्ताद्धोतोर्वेदेभ्यो वा एतल्लोकेभ्य इष्टका उपदधाति स्वर्गस्य लोकस्य समष्ट्यै यत्सायं जुहोति सहस्रं तेन कामदुघा अवरुन्द्धे यत्प्रातः सहस्रं तेन यदस्याग्निराधीयते सहस्रं तेन यमराज्यं वा अग्निष्टोमेनाभिजयति सोमराज्यमुक्थ्येन सूर्यराज्यं षोडशिना स्वाराज्यमतिरात्रेणैतानि वै सर्वाणीन्द्रो ऽभवदेतानि सर्वाणि भवति य एतैर्यजते सर्वमेतद्भवति य एवं वेद हविष्मान्वा एको देवयाज्येकः सहस्रयाज्येको यो ऽग्निहोत्रं जुहोति स हविष्मान्यो दर्शपूर्णमासौ यजते स देवयाजी यश्चातुर्मास्यैर्यजते स सहस्रयाज्यग्निहोत्रे वै सर्वे यज्ञक्रतवः सर्वान्यज्ञक्रतूनवरुन्द्धे य एवं विद्वानग्निहोत्रं जुहोति ॥ ६ ॥

Vgl Kâth. 6, 7, Kap S 4, 6

---

1) M 1 चर्यैतेनस्य, desgl M 2 ohne Accent  2) So M 1 (nur ohne die ३ desgl M 2, ohne Accent (das ganze Blatt ohne Accent) aber H, Bb u B दग्ध्व 3) M 1 पूर्वेण, H u. Bb पूर्वेणा, desgl M 2 u B, ohne Accent, die ३ fehlt in d Mss  4) So M 1, die andern Mss °मसूर्या, cf 1, 6, 10 a A

प्रेयमेधा वै सर्वे सह ब्रह्मविदुस्ते ऽग्निहोत्रेण समराधयꣳस्तेषां त्रिरेको ऽजुहोद्द्विरेकः सकृदेकस्तेषाꣳ यस्त्रिरजुहोत्तमपृच्छन्कस्मै त्वमहौषीरिति सो ऽब्रवीत्त्रेधा वा इदमग्नये प्रजापतये सूर्यायेत्यथ यो द्विरजुहोत्तमपृच्छन्कस्मै त्वमहौषीरिति सो ऽब्रवीद्द्वेधा वा इदमग्नये च प्रजापतये च सायꣳ सूर्याय च प्रजापतये च प्रातरित्यथ यः सकृदजुहोत्तमपृच्छन्कस्मै त्वमहौषीरिति सो ऽब्रवीदेकधा वा इदं प्रजापतय एवेति तेषाꣳ यो द्विरजुहोत्स आर्ध्नोत्तस्येतरे साजात्यमुपायन्नृध्नोति य एवꣳ विद्वानग्निहोत्रं जुहोत्युपास्य समानाः साजात्यꣳ यन्ति प्रदोषमग्निहोत्रꣳ होतव्यꣳ व्युष्टायां प्रातर्वृद्धान्गर्भान्प्रजनयति तदाहुः परा वा एतस्याग्निहोत्रं पतति यस्य प्रदोषे न जुह्वतीति यदि मन्येत ऋतुमत्यनैषमिति ॥ भूर्भुवः स्वः ॥ इति पुरस्ताद्धोतोर्वेदेत्तेनैव सर्वं नान्तरेति ॥ दोषा वस्तोर्नमः स्वाहा ॥ इति जुहुयादृतुमेव नात्यनैद्धोतव्या३न्न[1] होतव्या३मिति[2] मीमाꣳसन्ते यस्याहुतमग्निहोत्रꣳ सूर्यो ऽभ्युदियाद्धोतव्यमेवाग्नये वा एतर्हृत्यै गुप्त्यै हूयते प्रजननं तु छम्बट्करोति यदि मन्येत ऋतुमत्यनैषमिति ॥ भूर्भुवः स्वः ॥ इति पुरस्ताद्धोतोर्वेदेत्तेनैव सर्वं नान्तरेति ॥ प्रातर्वस्तोर्नमः स्वाहा ॥ इति जुहुयादृतुमेव नात्यनैत्तद्यथा कारुद्वेषिणे जुह्वत्येवमस्य हुतं भवति यस्याग्निमनुद्धृतꣳ सूर्यो ऽभिनिम्रोचेद्यो ब्राह्मणो बहुवित्स उद्धरेत्सर्वेणैवैनं ब्रह्मणोद्धरत्यग्निहोत्रेणानुद्रवेद्भागधेयेनैवैनं प्रणयत्यथो भागधेयेनैवैनꣳ समर्धयति वरो दक्षिणा सर्वत एवैनं दिग्भ्यो वरेण च्यावयति यस्योभावनुगता अभि-

1) So H, desgl B, ohne Accent, M 1 °तव्यान्न, desgl. M 2, ohne Accent, in Bb fehlend S. 1, 6, 10 1, 8, 5  2) So H u Bb, desgl B, ohne Accent; M 1 होतव्यामिति: desgl M 2, ohne Accent

निम्रोचेद्यस्य वाभ्युदियात्पुनराधेयमेव तस्य प्रायश्चित्तिर्यथा वै पथो वर्तनी एवं दर्शपूर्णमासौ यथान्तरेवमग्निहोत्रमेवं वा अग्निहोत्रिणो दर्शपूर्णमासिने स्वर्गो लोको ऽनुभात्युपात्यानि हवीं॰षि वसन्त्यथ कस्मादग्निहोत्रं नोपवसन्तीति ब्रह्मवादिनो वदन्ति प्रततं वा एतदपरिमितमसं॰स्थितमश्नाति मा॰संमुप स्त्रियमेति तस्मान्नोपवसन्ति पशुव्रतेन भवितव्यं तूष्णीमिव पशवः संभवन्ति ते[1] मेध्या यत्तूष्णीं स्त्रियमुपैति मेध्यतरस्तेन भवति हिंकृत्योपेयादेवमिव हि पशव उपयन्ति मेध्यत्वाय सं॰स्थाप्या३न्न[2] सं॰स्थाप्या३मि[3]ति मीमा॰सन्ते ऽग्निहोत्रं यत्सं॰स्थापयेत्तृणमक्तानुप्रहरेत्सा ह्यग्निहोत्रस्य सं॰स्थितिस्तदाहुर्यदा वै जीयते यदा प्रमीयते यदार्तिमार्छत्यथाग्निहोत्रं संतिष्ठत इति तन्न सं॰स्थाप्यं मनसा वा इमां प्रजापतिः पर्यगृह्णादियं वा अग्निहोत्रस्य वेदिरियमुपयाम ओषधयो बर्हिः स्रुच्वा[4] प्रोक्षणी दिशः परिधयो यत्किंचाभ्याधीयते स इध्मो यजमानो यूप उन्नीयमाने स्थेयमेवमिव हि यूपः संमृद्धै मध्यतो वा एष यज्ञः प्रततो यदग्निहोत्रं तस्मादग्निहोत्री दर्शपूर्णमासी सर्वं बर्हिष्यं ददाति मध्यतो ह्येतद्यज्ञस्य दीयते[5] यदग्निहोत्रे होतव्यं राजन्यस्याग्निहोत्रा३न्न[6] होतव्या३मि[7]ति मीमा॰सन्त आमादिव वा एष यद्राजन्यो बहु वा एषो ऽयज्ञियममेध्यं चरत्येत्यनन्नं जिनाति ब्राह्मणं तस्माद्राजन्यस्याग्निहोत्रमहो-

---

1) So M 1 u 2, in H, Bb, B fehlt ते 2) So M 1, desgl M 2 u B, ohne Accent, H, Bb स॰स्थाप्या३न्न 3) So M 1, desgl M 2, B, ohne Accent, H, Bb स॰स्थाप्या३मिति 4) M 1 स्रुच्वा 5) So M 1, eigentlich auch M 2 so, aber dann corrigirt wie H, Bb u B दीयते 6) So H u Bb, desgl B, ohne Accent, M 1 °होत्रान्न, desgl M 2, ohne Accent 7) In den Mss fehlt die ३

तथ्यमृतं वै सत्यमग्निहोत्रं ब्राह्मणं ऋतं सत्यं तस्माद्ब्राह्मणस्यैव होतव्यमथो ब्राह्मणायैवास्यायतो[1] गृहं[2] आहरेयुस्तद्धुतमेवास्याग्निहोत्रं[3] भवत्यथो ये ऋतमिव सत्यमिव चरेत्तस्य होतव्यमनुसंतत्यै ॥ ७ ॥

Vgl. Kâṭh. 6, 6. 8; Kap S. 4, 5. 7.

याग्निहोत्राययोपसृष्टा निषीदेद्यस्यान्नं नाद्यात्तस्यै तां दद्याद्वर्तिं वा एषा यजमानस्यानुत्सह्य निषीदति तयैवैना सह निरवदयते गृहे तु तस्य ततः परो नाश्नीयाद्यदश्नीयादार्तिमार्च्छेद्यस्याहुते ऽग्निहोत्रे पूर्वो ऽग्निरनुगच्छेदग्निना च सहाग्निहोत्रेण चोद्द्रवेद्भागधेयेनैवैनं प्रणयत्यथो भागधेयेनैवैनं समर्धयत्यथाभिमन्त्रयेत[5] ॥

इत एव प्रथमं जज्ञे[6] अग्निरेभ्यो योनिभ्यो अधि जातवेदाः ।
स गायत्र्या त्रिष्टुभा जगत्यानुष्टुभा च देवेभ्यो हव्यं वहतु प्रजानन् ॥

इत्येते वा एतस्य योनयः स्वेभ्य एवैनं योनिभ्यो ऽधि प्रजनयति ॥ इषे राये रमस्व सहसे द्युम्नायोर्जे ऽपत्याय[7] ॥ इत्येतान्येवावरुन्द्धे ऽथो रमयत्येवैनम् ॥ सम्राडसि स्वराडसि सुषदा[8] सीद ॥ इति सुषदे[9]वैनं सादयति ॥ सारस्वतौ त्वोत्सौ प्रावताम् ॥ इत्यृक्सामे वै सारस्वता उत्सौ ताभ्यामेवैनं प्रावति ताभ्यां समर्धयत्यग्नये ज्योतिष्मते ऽष्टाकपालं निर्वपेद्वारुणं यवमयं चरुं यस्याहुते ऽग्निहोत्रे पूर्वो

---

1) M 2 ब्राह्मणस्यैवास्या° 2) H, Bb, B गृहां 3) M 1 तद्धुतम°; H, Bb तत् हुतम°; M 2 ohne Accent. 4) Die Mss schwanken, M 1 यस्याहुतेऽग्निहोत्रे°; desgl M 2, ohne Accent; H, B यस्याहुतेऽग्निहोत्रे°, Bb यस्याहु ऽग्निहोत्रे° 5) M 2 °त्यथो भिम° 6) So M 1 u. 2; in H, Bb, B प्रथमं यज्ञे, P प्रथमः यज्ञे । 7) P ऽपत्याय । 8) So M 2 (ohne Accent); P° सुषदा । सुसदेति सु सदा ।; M 1, H, Bb u. B सुसदा 9) So M 2 (ohne Accent), M 1, H, Bb u B सुषदेविन°

ऽग्निरनुगच्छेत्तमो वा एतस्य यज्ञं युवते यस्याहुते ऽग्निहोत्रे पूर्वो ऽग्निरनुगच्छति यदग्नये ज्योतिष्मते ज्योतिषैवास्य यज्ञं समर्धयति वारुणीं चनिर्वपेद्वारुणो वरुणादेवास्याधि यज्ञं स्पृणोति यस्याहुते ऽग्निहोत्रे ऽपरो ऽग्निरनुगच्छेत्तत एवं प्राञ्चमुद्धृत्यान्ववसायाग्निहोत्रं जुहुयादथाभिमन्त्रयेत ॥ भवतं नः समनसौ समोकसौ सचेतसा अरेपसा इति समनसा एवैनौ करोति यजमानस्याहिंसाया एतौ वै तौ या आहुर्ब्रह्मवादिनो नैकः कुब्जिर्द्वौ व्याघ्रौ विव्याचेति यदग्नये ऽग्निमते ऽष्टाकपालं निर्वपेद्यस्याग्ना अग्निमभ्युद्धरेयुर्देवताभ्यो वा एष समदं करोति यस्याग्ना अग्निमभ्युद्धरन्ति यदग्नये ऽग्निमते देवता एवास्मै भूयसीर्जनयति वसीयान्भवति ॥ ८ ॥

Vgl TS 2, 2, 4, 6—S, 4, 2, 5, 1, VS 1º 60, Man Çr 3, 3

अन्वग्निरुषसामग्रमख्यदन्वहानि प्रथमो जातवेदाः ।
अनु सूर्यस्य पुरुत्रा च रश्मीननु द्यावापृथिवी आततन्थ ॥

इत्यभिमन्त्रयेत यस्याहुतमग्निहोत्रं सूर्यो ऽभ्युदियादनुकशायैवैनत्पुनरवरुन्द्धे तदाहुरमुं वा एष लोकं समारोहयति सह प्रजया पशुभिश्च यजमानस्य तस्मादुत बहुराहिताग्निरपशुर्भवतीति तदुपस्थेयः ॥ इहैव क्षेम्य एधि मा प्रहासीर्मामनुमामुष्यायणम् ॥ इत्यस्मिन्वावैनमेतं लोके दाधार सह प्रजया पशुभिश्च यजमानो वसीयान्भवति मैत्रं चरुं निर्वपेत्सौर्यमेककपालं यस्याहुतमग्निहोत्रं

---

1) H पूर्वाग्निर॰, Bb पूर्वाग्निर॰ 2) So M 1, desgl M 2, ohne Accent, H कुब्जिर्द्वौ desgl B, ohne Accent, Bb कुब्जि द्वौ, der Sinn etwa „Ein Gebüsch (Röhricht) fasst nicht zwei Tiger“ 3) So corrigirt M 1 u 2 ॰मद्यद्॰, H, Bb u B ॰मद्यद्॰, P अख्यत् ।, aber Man Çr 3, 3 अकाशादिति 4) So M 2, nur ohne Accent, in M 1 H अनुख्यायैवैनत्, Bb अनुख्यायैवैनत्, B अनुकायैवैनुत् 5) P क्षेम्य । 6) P अमुं । अमुष्यायणं ।

सूर्यो ऽभ्युदियान्मित्रो वा एतस्य यज्ञं॰ युवते यस्याहुतमग्निहोत्रं॰ सूर्यो ऽभ्युदेति मित्रमहर्यन्मैत्रो मित्रादेवास्याधि यज्ञं॰ स्पृणोत्यथ यत्सौ३र्यो ऽमुनैवास्यादित्येन पुरस्ताद्यज्ञं॰ समर्धयति यस्याहुतमग्निहोत्रं॰ सूर्यो ऽभ्युदियादग्निं॰ समाधाय वाचं॰ यत्वा दंपती सर्वोह्णमुपासीयातां द्वयोर्गवोः सायमग्निहोत्रं जुहुयादुभयमेवास्मै भागधेयं प्रयच्छति सायन्तनं च प्रातस्तनं च यद्वै पुरुषस्यामयत्यश्नाती३ नाश्नाती३ इति वै तमाहुर्नाश्नातीति चेदाहुस्तद्वाव स्तो ऽमृतेति यन्नाश्नीतो न व्याहरतो ऽन्वेवैनमग्नातां तपसैनं पुनरवरुन्धाते ऽग्नये व्रतपतये ऽष्टाकपालं निर्वपेदग्निर्वै देवानां॰ व्रतपतिस्तमेव भागधेयेनोपासरत्स एनं॰ व्रतमालम्भयति यस्याग्निरपक्षायेद्यत्रैवैनमनुपरागच्छेत्तत्समाधायान्ववसायाग्निहोत्रं जुहुयादेति वा एतदग्निर्यदपक्षायति यत्रैवैनमनुपरागच्छति तत एनं पुनरवरुन्द्धे ऽग्नये पथिकृते ऽष्टाकपालं निर्वपेद्यस्याग्निरपक्षायेद्वहिष्पथं॰ वा एष एति यस्याग्निरपक्षायत्यग्निर्वै देवानां पथिकृत्तमेव भागधेयेनोपासरत्स एनं पन्थामपिनयत्यनड्वान्दक्षिणा स हि पन्थामपिवहत्यग्नये शुचये ऽष्टाकपालं निर्वपेद्यस्याभ्यादाव्येन संसृज्येताशुचितर इव वा एष यदभ्यादा३व्यो यदग्नये शुचये शुचिमेवैनं मेध्यं करोत्यग्नये क्षामवते ऽष्टाकपालं निर्वपेद्यस्याहिताग्नेः स३तो ऽग्निर्गृहान्दहेदग्निर्वा एतस्य क्षामो गृहानभ्युच्यति स दहत्येवापरं॰ यदग्नये क्षामवते यैवास्य क्षामा प्रिया तनूस्तामेवास्य भागधेयेन शमयत्यदाहुको ऽस्यापरम-

---

1) So M 4 u 2, s Ztschr DMG XXXIII, S 193, Pâ 5, 4, 88 8, 4, 7, H, Bb u B सर्वाह्ण॰ 2) So M 1 (nur die ३ über der Linie); desgl M 2, ohne Accent, in Bb ॰श्नाति नाश्नातीति, H ॰श्नाति नाश्नातीति, in B verstümmelt ॰श्नातीति 3) M 1 दहत्ये॰

निर्गृहीता भवति यस्याग्निरनुगच्छति तेभ्य एवावक्षाणेभ्यो ऽधि मन्थितव्यस्तेन स्वाद्योनेः प्रजनयति यदि न तादृशानि वावशाणानि[1] स्युर्भस्मनारणी सꣳस्पृश्य मन्थितव्यः स्वादेवैनꣳ योनेः प्रजनयत्यग्नये तपस्वते जनद्वते पावकवते ऽष्टाकपालं निर्वपेद्यस्याग्निरनुगच्छेन्न हि[2] वा एतस्मा अपिधीयन्ते ऽथैषो ऽनुगच्छत्योषधयो वै पावका ओषधीरेवास्मै पावका भागधेयमपिदधाति प्रजननाय ॥

चयस्त्रिꣳशत्तन्तवो य[3] वितत्निर इमं च यज्ञꣳ सुधया ददन्ते।
तेभिश्छिद्रमपिदध्मो यदच स्वाहा यज्ञो अप्येतु देवान् ॥

इति जुहुयाद्वद्वनो वा रथो वान्तरा वियायादेतावन्तो वै यज्ञस्य तन्तवो देवता वा एतास्तान्वा एतत्समवृक्षत्ताः सदधात्येतद्ध स्म वा आहुर्दाक्षायणास्तन्नून्नसमवृक्षद् गामन्वत्यावर्तयेति गौर्हि यज्ञिया मेध्येदꣳ विष्णुर्विचक्रमा इति पदꣳ योपयति विष्णोः स्विदेव यज्ञस्य विक्रान्तमकर३मो ऽन्वंतिषिञ्चति शान्त्यै ॥ ९ ॥

Vgl Mân Çr 3, 3 1

रौद्रं गवि सद्वायव्यमुपावसृष्टमाश्विनं दुह्यमानꣳ सौम्यं दुग्धꣳ वारुणमधिश्रितं मैत्रꣳ शरोगृहीतं मारुतं बिन्दुमत्पौष्णमुदन्तꣳ सारस्वतꣳ विष्यन्नꣳ वैष्णवं प्रतिनीयमानꣳ स्व३ग्र्यमुद्वासितं त्वष्टुरुन्नीयमानं धातुरुन्नीतꣳ वैश्वकर्मणमुद्यतꣳ सावित्रं प्रणीयमानं द्यावापृथिवीयं प्रह्रियमाणमैन्द्राग्नमुपसन्नं प्राजापत्यꣳ समिधि वैश्वदेवꣳ हुतम् ॥ १० ॥

॥ इति प्रथमकाण्डे अग्निहोत्रब्राह्मणं नाम अष्टमः प्रपाठकः ॥

---

1) So M 1, M 2 von hier ab nicht mehr vorhanden H, Bb, B ताद्दृशाणीवाव°
2) So M 1 u H, in Bb नहि 3) S den ganzen Vers oben 1, 7, 1

चित्तिः स्रुक् चित्तमाज्यं वाग्वेदिराधीतं बर्हिः केतो अग्निर्विज्ञातमग्निर्वाचस्पतिर्होता मन उपवक्ता प्राणो हविः सामाध्वर्युरिन्द्र गच्छ स्वाहा पृथिवी होता द्यौरध्वर्युस्त्वष्टाग्नीन्मित्र[1] उपवक्ता वाचस्पते वाचो वीर्येण संभृततमेनायक्षसे[2] यज्ञपतये वार्यमा[3] स्वस्कर्वाचस्पतिः[4] सोममपाज्जजनदिन्द्रमिन्द्रियाय[5,6] सोमः सोमस्य पिबतु शुक्रः शुक्रस्य पिबतु श्रातास्त[7] इन्द्र सोमा[8] वातापयो[9] हवनश्रुतो ऽग्निर्होताश्विनाध्वर्यू[10] रुद्रो अग्नीद् बृहस्पतिरुपवक्ता वाचस्पते ह्रिन्विधे[11] नामन्विधेम ते नाम विधेस्त्वमस्माकं[12] नाम वाचस्पतिः सोममपादस्मासु[13] नृम्णं धात्सोमः सोमस्य पिबतु शुक्रः शुक्रस्य पिबतु श्रातास्त[14] इन्द्र सोमा[15] वातापयो हवनश्रुतो महाहविर्होता सत्यहविरध्वर्युरच्युतपाजा अग्नीदच्युतमना उपवक्तानाधृष्यश्चाप्रति-[16] धृष्यश्चाभिगरा[17,18] अयास्य[19] उद्गाता विधे[20] नामन्विधेम ते नाम विधेस्त्वमस्माकं[21] नाम मा देवानां तन्तुश्छेदि मा मनुष्याणां नमो मात्रे पृथिव्यै ॥ १ ॥

Vgl 1, 9, 3—6, Kath 9, 8, Kap S 8, 11.

---

1) P अग्नीत् 2) P वा । यचसे । 3) P irrig वा । अर्यमा 4) P स्वरिति स्व । कः ।, Kâṭh 9, 8, Kap S 8, 11 वार्यमा स्वस्करो वा॰ 5) P अपात् । 6) P जजनत् ।, der Satz जजनदिन्द्र citirt bei Pâ 6, 1, 192 schol und Kâç zu diesem Sûtra Ebenso liest Kâṭh 9, 8 In Kap S. 8, 11 corrupt यजनदिंद्रम; vgl oben 1, 3, 20, TBr 2, 2, 3, 5 प्रजनदिन्द्रमिन्द्रियाय 7) So ist zu lesen, die Mss श्राता स्थ (so auch Kap S, ohne Accent), P श्राताः । स्थः ।; Kâṭh श्रातास्त 8) P sonderbarerweise इन्द्रसोमा इतीन्द्र सोमा । (also als Compositum) 9) P वातापय इति वात आपय ।, Kaṭh वातापे 10) P अध्वर्यू इत्यध्वर्यू । 11) So die Mss , P ह्रिन् । विध इति विधे ।, Kaṭh. हृद्विधे, Kap S रिविधे 12) So M 1, P विध इति विधे ।, B विधे, H, Bb धिधे 13) P अपा । अस्मासु । 14) Mss श्राता स्थ, P श्राताः । स्थ ।, s oben 15) P wie oben, in Bb सोमा ohne Accent 16) P अनाधृष्य इत्यना धृष्य । 17) P अप्रतिधृष्य इत्यप्रति धृष्य । 18) P fehlerhaft अभिगरे इत्यभिगरे । 19) P अयास्य । 20) So M 1, in den andern Mss ohne Accent. 21) So M 1, P विधेरिति विधे ।; die andern Mss. विधे स्त्व॰

अग्निर्यजुर्भिः सविता स्तोमैरिन्द्र उक्थामदैर्बृहस्पतिश्छन्दोभिर-[1]दितिरपंश्च बर्हिर्भिरादित्या आज्यैर्मरुतः सदोहविर्धानैर्विष्णुर्दीक्षातपोभ्यां मित्रावरुणौ धिष्ण्यैरश्विना आशिरा त्वष्टा समिधा पूषा स्वाहाकारैर्वाग्वायोः पत्नी पथ्या पूष्णः पृथि३व्यै सेनेन्द्रस्य धेना बृहस्पतेर्गायत्री वसूनां त्रिष्टुब्रुद्राणां जगत्यादित्यानामनुष्टुब्मित्रस्य विराड्वरुणस्य पङ्क्तिर्विष्णोर्दीक्षा सोमस्य ॥ २ ॥

Vgl 1, 9, 8 — Kath 9, 10

प्रजापतिर्वा एक आसीत्सो ऽकामयत यज्ञो भूत्वा प्रजाः सृजेयेति स दशहोतारं यज्ञमात्मानं व्यधत्त स चित्तिं स्रुचमकुरुत चित्तमाज्यं वाचं वेदिमाधीतं बर्हिः स दशधात्मानं विधाय मिथुनं कृत्वायतनमैच्छत्स वै त्रिवृत एव प्राणानायतनमचायत्तैः प्रजा असृजतोर्ध्वी उदतृणत्पूर्वपक्षः पञ्चदशस्तेन देवानसृजत ते देवा ऊर्ध्वा आप्यायन्तोर्ध्वं आप्यायते य एवं वेदावाङवातृणदपरपक्षः पञ्चदशस्तेनासुरानसृजत ते ऽसुरा अवाञ्चः प्राध्वंसन्त प्रास्य भ्रातृव्यो ध्वंसते य एवं वेद दिवा देवानसृजत[2] नक्तमसुरांस्ते देवाः शुक्ला अभवन्कृष्णा असुराः सत्येन देवानसृजतानृतेनासुरांस्ते देवाः सत्यमभवन्ननृतमसुरा दक्षिणेन हस्तेन देवानसृजत[2] सव्येनासुरांस्ते देवा वीर्यवन्तो ऽभवन्मृध्रा असुरास्ततो देवा अभवन्परासुरास्तद्य एवं वेद भवत्यात्मना परास्य भ्रातृव्यो ऽभवति सो ऽमन्यत क्व होष्यामीति स तदेव नाविन्दत्प्रजापतिर्याहोष्यन्तो अस्यान्यद्योतमासीत्प्राणास्ते[3] वा इन्द्रमेवात्मनायतनमचायन्त[4] इन्द्रं गच्छ

---

1) P उकथामदैरिन्द्र्युक्थ मदै । 2) In den Mss das Verb ohne Accent 3) Die Mss प्राणास्ते 4) M 1 इंद्र एवा॰

स्वाहेत्यपानद्वी३यं वै प्राणो वी३र्यमिन्द्रो वीर्य एव वीर्यमजुहोत् ॥ ३ ॥

Vgl. 1, 9, 1 — Kāth 9, 11, (TBr 2, 2, 3)

ते वै चतुर्होतारो न्यसीदन्त्सोमगृहपतया इन्द्रं जनयिष्यामा इति पृथिवी होतासीद् द्यौरध्वर्युस्त्वष्टाग्नीन्मित्र उपवक्ता ते वा एतौ ग्रहा अगृह्णत वाचस्पते वाचो वीर्येण संभृततमेनायक्षसे यज्ञपतये वार्यमा स्वस्करिति त एकविंशमायतनमचायंस्तेनेन्द्रमजनयंस्त इन्द्रं जनयित्वाब्रुवन्त्सूर्यामेति ते वै पञ्चहोतारो न्यसीदन्वरुणगृहपतयो ऽग्निर्होतासीदश्विनाध्वर्यू रुद्रो ऽग्नीद्बृहस्पतिरुपवक्ता यदश्विनेति तेन पञ्चहोता ते वा एतौ ग्रहा अगृह्णत वाचस्पते हिन्विधे नामन्विधेम ते नाम विधेस्त्वमस्माकं[1] नामेति ते चिणवमायतनमचायंस्तं सेतुं कृत्वा स्वरायंस्तेन पशूनसृजन्त तान्देवताभ्यो ऽनयन्यमायाश्वमनयंस्तस्यार्धमिन्द्रियस्यापाक्रामत्स एतं प्रतिग्रहमपश्यत ॥ देवस्य त्वा सवितुः प्रसवे ऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्यां प्रतिगृह्णामि यमाय त्वा मह्यं वरुणो ददाति सो ऽमृतत्वमशीय मयो दात्रे भूयान्मयो मह्यं प्रतिग्रहीत्रे[2] ॥ इति ऽसो ऽर्धमिन्द्रियस्योपाधत्तार्धमिन्द्रियस्योपधत्ते[3] य एवं विद्वानश्वं प्रतिगृह्णात्यथ यो ऽविद्वान्प्रतिगृह्णात्यर्धमस्येन्द्रियस्यापक्रामति रुद्राय गामनयंस्तस्य तृतीयमिन्द्रियस्यापाक्रामत्स एतं प्रतिग्रहमपश्यत् ॥ रुद्राय त्वा मह्यं वरुणो ददाति सो ऽमृतत्वमशीय मयो दात्रे भूयान्मयो मह्यं प्रतिग्रहीत्रे ॥ इति स तृतीयमिन्द्रियस्योपाधत्त तृतीय-

---

1) So M 1, die andern Mss विधे त्व॰    2) P प्रतिगृहीत्रे इति प्रति.गृहीत्रे ।, auch B प्रतिगृहीत्रे    3) So M 1, die andern Mss ॰स्योपाधत्ते

मिन्द्रियस्योपधत्ते[1] य एवं विद्वान्गां प्रतिगृह्णात्यथ यो ऽविद्वान्प्रतिगृह्णाति तृतीयमस्येन्द्रियस्यापक्रामत्यग्नये हिरण्यमनयंस्तस्य चतुर्थमिन्द्रियस्यापाक्रामत्स एतं प्रतिग्रहमपश्यत् ॥ अग्नये त्वा मह्यं वरुणो ददाति सो ऽमृतत्वमशीय मयो दात्रे भूयान्मयो मह्यं प्रतिग्रहीत्रे ॥ इति स चतुर्थमिन्द्रियस्योपाधत्त चतुर्थमिन्द्रियस्योपधत्ते य एवं विद्वान्हिरण्यं प्रतिगृह्णात्यथ यो ऽविद्वान्प्रतिगृह्णाति चतुर्थमस्येन्द्रियस्यापक्रामति बृहस्पतये वासो ऽनयंस्तस्य पञ्चममिन्द्रियस्यापाक्रामत्स एतं प्रतिग्रहमपश्यत् ॥ सांस्त्वाकृन्तन्[2]नपसो ऽतन्वत धियो[3] ऽवयन्बृहस्पतये त्वा मह्यं वरुणो ददाति सो ऽमृतत्वमशीय मयो दात्रे भूयान्मयो मह्यं प्रतिग्रहीत्रे ॥ इति स पञ्चममिन्द्रियस्योपाधत्त पञ्चममिन्द्रियस्योपधत्ते[4] य एवं विद्वान्वासः प्रतिगृह्णात्यथ यो ऽविद्वान्प्रतिगृह्णाति पञ्चममस्येन्द्रियस्यापक्रामत्युत्तानायाङ्गिरसायाप्राणदनयंस्तस्य[5] षष्ठमिन्द्रियस्यापाक्रामत्स एतं प्रतिग्रहमपश्यत् ॥ उत्तानाय त्वाङ्गिरसाय[6] मह्यं वरुणो ददाति सो ऽमृतत्वमशीय मयो दात्रे भूयान्मयो मह्यं प्रतिग्रहीत्रे ॥ इति स षष्ठमिन्द्रियस्योपाधत्त षष्ठमिन्द्रियस्योपधत्ते[7] य एवं विद्वानप्राणत्प्रतिगृह्णात्यथ[8] यो ऽविद्वान्प्रतिगृह्णाति षष्ठमस्येन्द्रिय-

---

1) So M 1, die andern Mss °स्योपाधत्ते 2) S Ztschr DMG XXXIII S 201 Monatsber d Kgl Akad d Wiss zu Berlin, Juli 1879, S 684, Kath 9, 9, Kap S 8, 12 (corrupt), Man Çr 11, 1 5, 2, 14 Durga zu Nir 3, 21 — P सां: । त्वा । अकृतन् । 3) So auch Man Çr, P धिय । अवयन् ।, Durga a. a O auch धियो aber einige Mss fügen वयित्र्यो hinzu, Kath u Kap S वयन्तीरवयन् 4) So M 1, die andern Mss. स्योपधत्ते 5) So M 1, H °सायाप्राण अनय°, desgl B, ohne Accent, Bb °सायाप्रणयजनय° 6) P त्वा । आगिरसाय । 7) So M 1, die andern Mss. °स्योपाधत्ते 8) So M 1 u H u Bb विद्वान् प्राण (wo die Nichtaccentuirung von प्राण auf die Schreibung von M 1 deutet), B विद्वान्प्राण

स्योपक्रामति ॥ क इदं कस्मा अदात्काम[1] कामायादात्कामो दाता काम प्रतिग्रहीता कामाय त्वा प्रतिगृह्णामि कामैतत्ते[2] ॥ इति समुद्रो वै कामो दक्षिणा कामो दक्षिणयैव दक्षिणा प्रतिगृह्णाति यो वै ता देवता वेद यास्ये दक्षिणामनयद्दक्षिणीयो ह[3] भवति नयति दक्षिणाम् ॥ ४ ॥

Vgl 1 9 1 — Kath 9 11 12 Kap S 8 19 VS 7 47 48 Man Çr II 1 5 2 14

ते वै सत्यन्तो ऽब्रुवन्ती नो[4] यूयं प्रयच्छत केनायतनेनार्चैव वेत्स्यथेत्यब्रुवंस्ते वै सप्तहोतारो न्यसीदन्नर्यमगृहपतयो[5] महाहविर्होतासीत्सत्यहविरध्वर्युरचित्तपाजा अग्नीदचित्तमना उपवक्तानाधृष्यश्चाप्रतिधृष्यश्चाभिगरा अयास्य उद्गाता ते वा एतं ग्रहमगृह्णत विधे नामन्विधेम ते नाम विधेस्त्वमसाक[6] नामेति ते चयस्त्रिंशमायतनमचायंस्तेनेदं समतन्वन्त्सप्तहोत्रा च वा इदं संतत त्रयस्त्रिंशेन च यदिदं देवमनुष्या[7] अऽन्यो ऽन्यस्मै सम्प्रयच्छते प्राणो वै दशहोता चक्षुश्चतुर्होता श्रोत्रं पञ्चहोता वाक्चात्मा च सप्तहोताग्निहोत्रं वै दशहोता दर्शपूर्णमासौ चतुर्होता चातुर्मास्यानि पञ्चहोता सौम्यो ऽध्वरः सप्तहोतायुषे कमग्निहोत्रं हूयते[8] सर्वमायुरेति य एवं वेद चक्षुषे कं दर्शपूर्णमासा इज्येते न चक्षुषो गृहे[9] य एवं वेद श्रोत्राय कं चातुर्मास्यानीज्यन्ते न श्रोत्रस्य गृहे य एवं वेद

---

1) So M 1. I कस्मै । अदात् । in H. Bb das Verb betont. 2) So H 1. काम । एतत् । ते । M 1 कामैतत्ते. Bb f. blend. 3) ह nur in M 1. 4) So M 1; in H. Bb fehlt नो; in B steht statt dessen तौ. 5) So M 1; in H. Bb u. B °न्नर्यमागृहपतयो. 6) So M 1. H विधं स्व° desgl. Bb B ohne Accent. 7) So M 1; in H. Bb देवमनुष्या. 8) So M 1; in H u. Bb हूयते. 9) Medium in passivem Sinne cf. गृहामसि RV 8 91 16 गृहते RV 5 30 1?; hinsichtlich der Endung cf. Delbrück altind. Verbum § 103. — Kath 9 13 liest न चक्षुषो गृहये — — न श्रोत्रस्य गृहये und so fort

काउर्यो न पृश्निरमिथुनं तदेषो व्याघ्ररूपं वै पृश्निर्बिभ्यत्यसात्पशवः कनीयाꣳसो ऽस्य पशवो भवन्ति यस्य तादृक्रूपभो भवति तदाहुर्[1] बीजमेवोत्सृज्यमित्येतद्वा[2] आसां बीजं यद्रोहितं रूपं पशुमान्भवति यस्य तादृक्रूपभो भवति यो धूम्रस्ताम्रधूम्रः स प्रजापतिः प्रजया च पशुभिश्च जायते यस्य तादृक्रूपभो भवति यस्य लोमशा ककुत्स स्तम्बी स्तम्बीव[3] प्रजया च पशुभिश्च भवति यस्य तादृक्रूपभो भवति यस्योर्ध्वा ककुत्ता ऊर्ध्वा आप्यायन्त ऊर्ध्वा अस्य पशवा आप्यायन्ते यस्य तादृक्रूपभो भवति यस्य दक्षिणतः पन्नं सा पापी सा स्रवन्त्यथ यस्य सव्यत उन्नतं सा पुण्या सोपाहरन्ती या उत्पृष्टिस्ता ऊर्ध्वा आप्यायन्त ऊर्ध्वा अस्य पशवा आप्यायन्ते यस्य तादृक्रूपभो[4] भवति यस्य सव्यतः पन्नं सा पापी सा स्रवन्त्यथ यस्य दक्षिणत उन्नतं सा पुण्या सोपाहरन्ती या सव्यसाचिनी सा पुण्या सोपाहरन्ती या सꣳशृङ्गी सा गोष्ठस्ता न प्रछिन्द्यादनुसृष्टस्य[5] गोषु स्यातामेतौ वै पशूनामस्कन्नं हविरस्कन्नमस्य हविर्भवति यस्यानुसृष्टिर्गोषु[6] भवन्त्युक्षा[7] चास्य वेहच्च गोषु स्यातामेतौ वै पशूनामूर्जे बिभृतो ऽक्षोधुका अस्य पशवो भवन्ति यस्योक्षा च वेहच्च गोषु भवतः ॥ १४ ॥

॥ खिलकाण्डे गोनामिको द्वितीयः प्रपाठकः ॥

---

1) So M u Bb in H तदाहु॰, desgl B ohne Accent, Ben यदाहु॰ 2) Das ॰ fehlt in den Mss 3) So meine Correctur, M Ben स्तम्बीव, desgl B, ohne Accent, in H u Bb स्तम्बीक 4) Ben तादृक्रूपभो॰, in M sind die beiden hier eingeschalteten Worte auch am Rande von einer späteren Hand hinzugefügt 5) So M die andern Mss ॰दसृष्टस्य 6) So M, die andern Mss यस्यानसृष्टि गोषु, vielleicht übrigens auch in M das r nachträglich als delirt bezeichnet? 7) So corrigirt, die Mss ॰क्षा

अरातीयन्ति वा अन्ये पुरुषाय नान्ये[1] ऽरातीयन्ति सा निर्ऋतिर्ये नारातीयन्ति सानुमतिस्तेभ्य उभयेभ्यः सह निर्वपन्त्युभौ सह शृतौ[2] कुर्वन्ति नैर्ऋतेन पूर्वेण प्रचरन्ति दक्षिणा परेत्य स्वकृत इरिण एतद्वै निर्ऋतिगृहीतं पृथिव्या निर्ऋतिगृहीत एव निर्ऋतिं निरवदयत एकोल्मुकं निधाय विस्रंसिकायाः काण्डाभ्यां जुहोति जुषाणा निर्ऋतिर्वेतु स्वाहा वासः कृष्णं भिन्नान्तं दक्षिणैतद्धि निर्ऋत्या रूपमर्धं वै पुरुषस्य निर्ऋतिगृहीतमर्धमनिर्ऋतिगृहीतं यन्निर्ऋतिगृहीतं तदेवास्मात्तेन निरवदयते पुनरेत्यानुमत्या अष्टाकपालेन प्रचरन्ति निर्ऋतिमेव निरवदायेयं वा अनुमतिर्वाग्वा अनुमतमेवैनं[3] सर्वमाक्रमयत्यष्टाकपालो भवति गायत्री ह्येषा गायत्री वाग्धेनुर्दक्षिणैतद्ध्यनुमत्या रूपमथ ये उदञ्चः शम्यामतिशीयन्ते तानुदङ् परेत्य वल्मीकवपामुद्रुज्य जुहुयादिदमहममुष्यामुष्यायणस्य क्षेत्रियमवयजा[4] इति तत्पुनरपिदधातीदमहममुष्यामुष्यायणस्य क्षेत्रियमपिदधामीति क्षेत्रियं[5] वा एतं गृह्णाति[6] यं चैनमन्वियं क्षेत्रस्य पत्न्यस्यामेव क्षेत्रियमवयज्याथैनं[7] सर्वमाक्रमयति श्वो भूत आदित्येभ्यो भुवद्भ्यो[8] घृते चरुरित्यादित्या वा इत उत्तमाः स्वर्गं लोकमायंस्तेभ्य एव प्रोच्य स्वर्गं लोकमेत्यादित्या वा अस्मिँल्लोक ऋद्धा आदित्या अमुष्मिन्नुभयोरेव लोकयोर्ऋध्नोति वशा दक्षिणा वशयैव स्वर्गं लोकमभ्यारोहति श्वो भूत आग्नावैष्णवमेकादशकपाला इत्यमिवँ संवा

1) So corrigirt, in den Mss ohne Accent, Bb चे   2) So M, H, Bb, in Ben सहःशृतौ, B सह भृतौ   3) So die Stelle in Ben u M  in H u Bb प्रचरति निर्ऋतिमेतिर्वाग्वा अनुमतिरवदायेय॰ वा अनुमतमेवैन॰, desgl B, ohne Accent   4) Ben चैत्रीयं॰   5) Ben चैत्रीयं॰   6) Bb प्रतिगृह्णाति   7) Ben चैचियंम॰   8) Mit भुं bricht Ben am Schluss von p 37 plotzlich ab und geht am Anfang von p 38 auf IV, 13, 1 a E uber  Die nachstfolgenden Partieen fehlen in Ben vollig

देवता विष्णुर्यज्ञो देवताश्चैवं यज्ञं चालब्धामिवैं यज्ञस्यान्तो ऽवस्ताद्विष्णुः परस्तादुभयत एवं यज्ञस्यान्ता उदयहीदुभयत एवं यज्ञस्यान्ता उद्गृह्य यथोत्सङ्गं आवपेतैवं वा एतद्यज्ञमावपते तस्य यथाकामं निर्वपमाण एत्यनड्वान्वामनो[1] दक्षिणा यद्वही तेनाग्नेयो यद्वामनस्तेन वैष्णवो रूपेणैवैनं समर्धयति श्वो भूते ऽग्नीषोमीया एकादशकपाला इत्यग्नीषोमाभ्यां वै वीउर्येणेन्द्रो वृत्रमहन्वृत्रं खलु वा एष हन्ति यो राजसूयेनाभिषिञ्चते तस्मान्नेममेवैतद्धिरण्यं दक्षिणा सत्यं वै हिरण्यं सत्येनैवं हन्ति श्वो भूत ऐन्द्राग्न एकादशकपाला इत्यग्नीषोमाभ्यां वै वीउर्येणेन्द्रो वृत्रमहंस्स ओजसा वीर्येण व्यार्ध्यत स एतमैन्द्राग्नमपश्यत्तेनौजो वीर्यमात्मन्नधत्तौजसा वा एष वीर्येण व्यृध्यते यो राजसूयेनाभिषिञ्चत ओजो वीर्यमिन्द्राग्नी ओजसैवैनं वीर्येण समर्धयतो ऽनड्वानृषभो दक्षिणा यद्वही तेनाग्नेयो यन्मुष्करस्तेनैन्द्रो रूपेणैवैनं समर्धयति श्वो भूत आग्नेउयो ऽष्टाकपालो माहेन्द्रं दधीत्यृञ्ज्या एवाग्नेय इन्द्रो वै वृत्रमहउन्त्सो ऽन्यान्देवानत्यमन्यत स महेन्द्रो ऽभवत्स एतमुद्धारमुदहरद्वृत्रं हत्वा तदुद्धार एवास्यैष भागं एवं तस्माद्राजा संग्रामं जित्वोदाजमुदजयत्पयसा वा एष वीर्येण व्यृध्यते यो राजसूयेनाभिषिञ्चते यत्पयः पयसैवैनं समर्धयतीन्द्रियेण वा एष वीर्येण व्यृध्यते यो राजसूयेनाभिषिञ्चते यदैन्द्रमिन्द्रियेणैवैनं[2] वीर्येण समर्धयति देवताभिर्वा एष व्यृध्यते यो राजसूयेनाभिषिञ्चते सर्वदेवउत्यं वै वासो यद्वासः क्षौमं दक्षिणा देवताभिरेवैनं समर्धयति ॥ १ ॥

Vgl. oben 2, 6, 1 — TBr 1, 6, 1, 1—9

1) So meine Correctur; die Mss निर्वपमाणयेत्यनड्वा° 2) M यदैन्द्रं इन्द्रि°

देवा ओषधीषु पक्कास्वाजिमयुः स इन्द्रो ऽवेदग्निर्वा वा इमाः प्रथम उज्जेष्यतीति सो ऽब्रवीद्यतरो नौ पूर्व उज्जयेत्तन्नौ सहेति तामग्निरुदजयत्तदिन्द्रो ऽनूदजयत्तस्मादैन्द्राग्नमग्र्यो आहुरैन्द्रं काउयेमित्यग्निर्हि तामग्र उदजयत्तदुज्जित्या एवाग्रायणो द्वादशकपालो भवति द्वादश मासाः संवत्सरः संवत्सराद्धि तदध्यभवत्सप्तदश सामिधेनीः कार्याः पञ्च ऋतवो द्वादश मासा एष संवत्सरः संवत्सराद्धि तदधि भवत्येका वै तर्हि यवस्य मुष्टिरासीदेका व्रीहेरेका माषस्यैका तिलस्य तद्विश्वे देवा अब्रुवन्वयं व एतत्प्रथयिष्यामो भागो नो ऽस्त्विति तद्विश्वे देवा अप्रथयंस्तद्भूत एव वैश्वदेवो ऽथो प्रथयत्येवैतेन पयसि स्याद्वैश्वदेवो वैश्वदेवं हि पयो ऽथ वा इयमब्रवीन्मयि वा एतदध्यसौ वृष्ट्या पचति नैतदितो ऽध्युज्जेष्यथ भागो मा अस्त्विति तदाभ्यां वा एष भागः क्रियत उज्जित्या अथो प्रतिष्ठित्या एव यद्द्यावापृथिवीयः सौमीर्वा ओषधयः सोमा ओषधीनामधिराजस्तस्य वा एष भागो यदकृष्टपच्यं तदुद्धार एवास्यैष भाग एव तस्माद्राजा संग्रामं जित्वोदाजमुदजते ग्राम्या वा अन्या ओषधय आरण्या अन्यास्ता एवास्यैतेनोभयीरवेष्टा भवन्ति याः फालकृष्टास्तासामेतेनाग्रायणं करोति या आरण्यास्तासामुत्तरेणानीतो वा एष देवानां य आहिताग्निर्यदकृत्वाग्रायणं नवस्याश्नीयाद्देवानां भागं प्रतिकॢप्तमश्नीयादार्तिमार्छेत्सर्वेभ्यो वा एषो ऽन्येभ्यो ऽभिषिच्यते यो राजसूय आग्रायणो ऽन्नाद्यस्यावरुद्ध्यै वत्सः प्रथमजो दक्षिणा रेत इव ह्येषो ऽग्रजातः प्रजात्यै ॥ २ ॥ Vgl 2, 6, 2 — TBr 1, 6, 1, 10 ff.

1) M °स्वाजीम°, Taitt Br 1, 6 10 ओषधीष्वाजिमयुः 2) So M, in H u Bb वृष्ट्या; B वृष्ट्वा 3) Hierüber vgl Einl zum 1 Kanda p XV, Maitr S 1, 10, 16 4) Bb प्रजाते

अथैतानि चातुर्मास्यानि संवत्सरं वै चातुर्मास्यानि परीज्यन्ते संवत्सरादेवैनान्यध्याप्त्वावरुन्द्ध उत्सन्नयज्ञो वा एष संवत्सराद्वा अध्युत्सन्नयज्ञो ऽवरुध्यते संवत्सरादेवैनमध्याप्त्वावरुन्द्धे पशवो वा एते चातुर्मास्येभ्यो ऽध्यतिरिच्यन्ते यच्छुनासीरीयं तानेवाप्नोति वर्ष्य उदके यजेतैतद्धि पशूनां नेदिष्ठमथैतानि पञ्च हवींषि संतत्यै ग्रामकामो यजेत वायुर्वा इमाः प्रजा नस्योता इत्थं चेत्थं च नेनीयते यद्वायवे वायुरेवास्मै नस्योतां विशं निनयत्यन्नकामो यजेत संवत्सरो वा इन्द्रः शुनासीरः संवत्सरो ऽन्नाद्यस्य प्रदाता तमेव भागधेयेनोपासरत्सो ऽस्मा अन्नाद्यं प्रयच्छति वर्ष्य उदके यजेतैतद्ध्यन्नाद्यस्य नेदिष्ठं वृष्टिकामो यजेत वायुर्वा इमं समीरयति स आप्याययति ततो वर्षति संवत्सरो वा इन्द्रः शुनासीरः संवत्सरमनुवर्षति ॥ ३ ॥

Vgl. TBr. 1, 7, 1, 1.

देवाश्च वा असुराश्चास्पर्धन्त स वृत्र इन्द्रमब्रवीत्त्वं देवानां श्रेष्ठो ऽस्यहमसुराणां संशक्नवाव मा ना अन्यो ऽन्यं ऽवधीदिति तौ वै समामेतामनभिद्रोहाय ते देवा वृत्रममन्यन्तायं वावेदं भविष्यतीति त इन्द्र ऐच्छन्हनामेममिति सो ऽब्रवीत्संधा वै मे संहितानभिद्रोहायेति तमग्निरब्रवीदहमेव त्वतः पास्यामीति पृथिव्या अहमन्तरिक्षादिति वरुणो ऽहं दिव इति रुद्रस्ततो वै देवा वृत्रमघ्नन्वृत्रं खलु वा एष हन्ति यो राजसूयेनाभिषिञ्चते तद्यानेभमेवैतद्देवाश्च वा असुराश्च समयतन्त तानग्निस्त्रेधात्मानं कृत्वा प्रत्ययतत्तानग्निरेवास्मिँल्लोके

1) So M; in H u. Bb तान्येवा°; desgl. B. ohne Accent. 2) So M; in H u. Bb इंद्रा मब्रवी°; B इंद्रः मब्रवी° 3) So M; H u. Bb betonen समामेतामं° 4) Von hier bis पृथिव्या (excl.) in B eine Lücke 5) H u. Bb °यजता°

भूत्वा वरुणो ऽन्तरिक्षे रुद्रो दिवि स इन्द्रो ऽमन्यतायं वावेदं भविष्यतीति सो ऽब्रवीदहं विश्वाभ्य आशाभ्य इति ततो वा अजयं स्तांजित्वा एवैतदेतेनैव याजयेत्संग्रामे जयति संग्राममेतेनैव याजयेद्भ्रातृव्यवन्तं यो वास्य प्रियः स्यात्तं भवत्यात्मना परास्य भ्रातृव्यो भवति यद्वै तदिन्द्रस्तुरीय उपसमपद्यत तस्मादिन्द्रस्तुरीयं धेनुरनड्वाही दक्षिणा यद्वहिनी तेनाग्नेयी यद्धेनुः सती दान्ता तेन वारुणी यच्छौस्तेन रौद्री यत्मयस्तेनैन्द्री रूपैरेवैनां समर्धयतीन्द्रो वै नमुचिं नालभत स रश्मीन्कुलायं कृत्वान्वारोहदमुमादित्यं तं वा अन्वमन्त्रयत सखाया असावेति सो ऽब्रवीन्नाहं हनिष्यामीति सो ऽब्रवीत्संधां ते संदधे यथा त्वा न दिवा हनानि न नक्तं न शुष्केण नार्द्रेणेति तस्य वा उपोदये सूर्यस्य नीहारं संतत्यापां फेनेन शिरो ऽछिनत्तद्वा एनमन्ववर्तत मित्रद्रुगसीति पाप्मा वै नमुचेः शिरः पाप्मा वा एनं तदन्ववर्तत पाप्मानं वै स तेनापाहत पाप्मानमेवैतेनापहते ऽपां न्ययनादपामार्गेणाहरन्त्यापो वै रक्षोघ्नीरपो रक्षांसि न तरन्ति रक्षसामपहत्यै वरो दक्षिणा वरेणैव वरं स्पृणोत्यात्मा हि वर आत्मानं हि तस्य तदन्ववर्तत ये देवाः पुरःसदो अग्निनेत्रा रक्षोहणस्ते नो ऽवन्तु ते नः पान्तु तेभ्यः स्वाहेत्येतद्वै वऽन्त्या वा इमा दिशो यथादेवतं वा एतदाभ्यो दिग्भ्यो ऽधि रक्षांस्यपहन्त्यनुपरिक्रामं जुहोति सर्वाभ्य एव दिग्भ्यो ऽधि रक्षांस्यपहन्तीदमहं रक्षोभिः संमूहाम्यग्ने संदह रक्षः संदग्धं रक्ष इत्याह रक्षसां ध्वराधि रक्षसामन्तरित्या अथ यत्पुनः स-

———

1) So M, ohne Accent (a Bl), in H u Bb रश्मिन्; desgl. B, ohne Accent 2) So M, nur ohne Accent, in H u Bb असावेति; desgl B, ohne Accent 3) So B, ohne Accent, in H u Bb हनिष्यामीति; M हनिष्यसि नेति 4) Die Mss schwanken; M u. B निहारं; H u Bb नीहारं

मूह्य[1] जुहोति याम्य एवं दिग्भ्यो ऽधि रक्षांस्यपावधीत्तां भागिनीः करोत्यहिंसायै रथः पञ्चवाही दक्षिणा पञ्च दिशः पञ्च देवताः संमृद्ध्यै ॥ ४ ॥

Vgl 2, 6, 3 — TBr 1, 7, 1, 2 flg

सोमेनेजानं याजयेत्संवत्सरं वा एतस्य छन्दांसि यातयामानि भवन्ति यः सोमेन यजते छन्दांसि वै देविकाश्छन्दांसि वावास्मा एतद्यातयामानि पुनरयामाणि करोति राजसूयेनाभिषिषिचानं याजयेत्पष्ठौही दक्षिणाशो वा एष उभाभिषिच्यत आशा पष्ठौह्याशामेवास्मा अवकः पशुकामं याजयेच्छन्दांसि वै देविकाः पशवश्छन्दांसि गायत्र्यनुमतिस्त्रिष्टुब्राका जगती सिनीवाली कुहूरनुष्टुब्धाता वषट्कारो या पूर्वा पौर्णमासी सानुमतिर्योत्तरा सा राका या पूर्वामावास्या सा सिनीवाली योत्तरा सा कुहूश्चन्द्रमा एव धाता यद्द्वे अवरे द्वे परे तन्मिथुनं यत्पूर्यते ऽन्यां नान्यां तन्मिथुनं यत्पश्यत्यन्यां नान्यां तन्मिथुनं यदमावास्याया अधि चन्द्रमाः प्रजायते तन्मिथुनं तस्मादेवास्मै मिथुनात्पशून्प्रजनयति प्रजाकामं याजयेद्धातारमुत्तमं कुर्यात्स्त्रियो[3] वै देविकाः पुमान्धाता पराचीर्वै प्रजा रेतो दधते पराचीष्वेवास्मै रेतो दधाति तदाहुर्न[4] वै तेन पराधत्ते यदन्तरा प्रवीयन्ता इति व्यवदध्याद्धातारं मध्यतः सर्वा एवैना वृषमोदिनीः करोति तदाहुर्जीयत एव पश्चाच्चर इव तु भवति स्त्रीभ्यो ह्येनं पश्चात्परिणयन्तीति स यदा जायेताथ धात्रे पुरस्तान्निर्वपेदयं वै धातायमेवैनं परिणयति ॥ ५ ॥

Vgl 2, 6, 4 — TBr. 1, 7, 2

---

1) So corrigirt, die Mss समुह्य 2) B यजेत 3) So corrigirt, die Mss स्त्रीयो
4) Bb तस्मादाहु° 5) H u Bb यदाहु°

आमयाविनं याजयेद्धातारं मध्यतः कुर्यात्संवत्सरो वै धाता संवत्सरो हि वा एतस्य मुग्धो ऽथैतस्यामयति संवत्सरं वावास्मा एतन्मध्यतो ऽधीकूपदधैनमेतस्मान्मिथुनात्प्रजनयतीश्वराणि वा एतमेतानि छन्दांस्यृतेः पशोरशान्तानि निर्मृजः[1] पशुरप्यालभ्यः शान्त्या अनिर्मार्गायैते वै पशवो यद्व्रीहयश्च यवाश्च यद्व्रीहिमयः पुरोडाशो भवति तेनैव पशुमालभ्यते शान्त्या अनिर्मार्गाय वीरस्था वा अन्ये पशवो ऽवीरस्था अन्ये ये पुरस्तात्पुरोडाशास्ते वीरस्था ये पश्चात्पुरोडाशास्ते ऽवीरस्था ये पुरस्तात्पुरोडाशा भुञ्जतस्त उपतिष्ठन्ते प्रजापतिं ह्येते प्रतिष्ठामभ्यसृज्यन्त ये पश्चात्पुरोडाशाः पंप ते भवन्ति यासु स्थालीषु सोमाः स्युस्ते चरवः स्युः सोमो वै रेतोधाः प्रजननाय सर्ववेदसेनेजानं याजयेत्पशुभिर्वा एष व्यृध्यते यः सर्वं ददात्यन्न वा एष जघन्यं पशून्पश्यति यन्नैनान्विभजति यन्नैवैनान्विभजति तत एनान्पुनरवरुन्द्धे य एवं कश्च सोमेन यजेत तं याजयेत्संवत्सरं वा एतस्य छन्दांसि यातयामानि भवन्ति यः सोमेन यजते छन्दांसि वै देविकाश्छन्दांसि वावास्मा एतदयातयामानि[2] पुनर्यामाणि करोति ॥ ६ ॥

अथैतत्त्रिषंयुक्तं यत्पूर्वं त्रिषंयुक्तमित एवास्मै तेनोर्ध्वानिमांल्लोकान्दाधार यदुत्तरं त्रिषंयुक्तममुत एवास्मै तेनावाच इमांल्लोकान्दाधार तदेषां वावैते लोकानां विधृत्यै यत्पूर्वं त्रिषंयुक्तं वीरजननं तद्यदुत्तरं पशुजननं तद्यत्पूर्वं त्रिषंयुक्तं वीरानेवास्मै तेन ज-

1) So in M durch Correctur am Rande, eigentlich °शान्ता निर्मृजः; so auch in den andern Mss 2) B schaltet hier die Worte ein: भवन्ति यः सोमेन यजते छन्दांसि

नयति यदुत्तरं पशूꣳस्तेन यत्पूर्वं त्रिषꣳयुक्तꣳ रेत एव तेन दधाति यदुत्तरं प्र तेन जनयति यत्पूर्वं त्रिषꣳयुक्तं तेन यज्ञकामो यजेताग्निर्वै सर्वा देवता विष्णुर्यज्ञो देवताश्चैव यज्ञं चालब्धेन्द्रो वै यज्ञो विष्णुर्यज्ञस्तद्यज्ञस्यैवैष आरम्भो ऽथ यद्वैष्णवो विष्णुर्वै यज्ञो यज्ञ एव प्रतितिष्ठति यदुत्तरं त्रिषꣳयुक्तं तेन पशुकामो यजेत सौमो वै रेतोधाः पूषा पशूनां प्रजनयिता सौम एवास्मै रेतो दधाति पूषा पशून्प्रजनयतीन्द्रियेण वै पशवः प्रजायन्ते पूषा प्रजनयतीन्द्रियेणैवास्मै पूषा पशून्प्रजनयत्यैष यत्सौम्यः पशवो वै पूषा पशुष्वेव प्रतितिष्ठत्यथैतद्वैश्वानरवारुणꣳ[1] संवत्सरो वा अग्निर्वैश्वानरस्तस्य वा एते स्वा यदृतवस्तेषाꣳ वा एउषो ऽभिषिक्तो राजाभिषिक्तो वै देवानाꣳ वरुण एतौ वै देवानाꣳ सुतौ एतौ सर्वपती[2] एतौ सर्वस्येशाते ता एनꣳ सुवाते यावन्तो वा एतस्य स्वा अनुका वै त एतमनुका देवा वरुणꣳ यावन्त एवास्य स्वास्तानस्मा अनुकानविवादिनः करोतीयाꣳश्वरम्भवत्येतावान्वा आत्मा यावानेवास्यात्मा तꣳ वरुणान्मुञ्चति संवत्सरो वा अग्निर्वैश्वानरः संवत्सर एवैनं प्रतिष्ठापयति संवत्सरायुषमेनं करोति तस्माद्राजसूयाभिषिक्तस्य जरसा दन्ता अवशीयन्ते संवत्सरे ह्येनं प्रतिष्ठापयति संवत्सरायुषमेनं करोति यो ज्योगामयावी स्यात्तमेतेन याजयेद्वरुणेन हि वा एष पाप्मना गृहीतो ऽथैतस्य ज्योगामयति यद्वारुणो वरुणादेवैनं तेन मुञ्चतीयाꣳश्वरम्भवत्येतावान्वा आत्मा यावानेवास्यात्मा तꣳ वरुणान्मुञ्चति

1) H u. Bb °रुणः 2) So M, desgl. B, ohne Accent; H सर्वपती; Bb सर्वसती
3) Dies Wort in den Mss. ohne Accent

संवत्सरो वा अग्निर्वैश्वानरः संवत्सर एवैनं प्रतिष्ठापयति संवत्सरायुषमेनं करोति ॥ ७ ॥

अथैते रत्निनः क्षत्रस्य वा एतान्यङ्गानि यस्य वा एतान्योजस्वीनि भवन्ति तद्राष्ट्रमोजस्वी[1] भवति तान्येवास्यौजस्वीनि करोति क्षत्रस्य वा एतान्यङ्गानि यस्य वा एतानि तेजस्वीनि भवन्ति तद्राष्ट्रं तेजस्वी[2] भवति तान्येवास्य ब्रह्मणा तेजस्वीनि करोति बार्हस्पत्यश्चरुर्ब्रह्मणो गृह इति ब्रह्म वै बृहस्पतिर्बृहस्पतिपुरोहितं खलु वै राष्ट्रमृध्नोति ब्रह्म वा एतत्पुरस्ताद्राष्ट्रस्यात्यौहीदयो ब्रह्मण एवं राष्ट्रमनुकं करोत्यैन्द्र एकादशकपालो राज्ञो गृह इतीन्द्रियं वा इन्द्र इन्द्रियं एवं प्रतितिष्ठत्यादित्यश्चरुर्महिष्या गृह इतीयं वा अदितिरस्या एवैनं मात्रां गमयतीमामेवैनं[3] प्रजाभ्य उपजीवनीयं करोति धेनुर्दक्षिणैतद्ध्यदित्या रूपं नैर्ऋतश्चरुर्नखावपूतानां परिवृक्त्या गृह इति निर्ऋतिगृहीता हि वा एषाथैतां परिवृञ्जन्ति[4] निर्ऋतिमेव निरवदायेयं वा अनुमतिरस्या एवैनं मात्रां गमयतीमामेवैनं[5] प्रजाभ्य उपजीवनीयं करोति श्येनी वडापस्फुरा दक्षिणैतद्धि निर्ऋत्या रूपमाग्नेयोऽष्टाकपालः सेनान्यो गृह इत्यग्निर्वै सर्वा देवता देवताभिरेवास्य सेनामुखं जित्यै संश्यति हिरण्यं दक्षिणा सत्यं वै हिरण्यं सत्येनैव जयत्याश्विनो द्विकपालः संग्रहीतुर्गृह इति रथरेपमेवास्मात्तेन निरवदयते सवत्यौ दक्षिणेति सवत्या इव हि सव्यस्थसारथी[6] रथमभि

---

1) So die Mss., wohl °जस्वि zu schreiben 2) So die Mss.; cf. oben ओजस्वी 3) M u. B °मामिवैन, cf. unten 4) So M u. B, in H °वृञति, Bb °वृञसि 5) So corrigirt, die Mss °मिवैन 6) So corrigirt, M u. B सव्यस्सारथी, H सव्यस्मारथी oder सव्यस्समारथी, Bb सव्यस्समारथी

सावित्रो ऽष्टाकपालः क्षत्तुर्गृहे प्रसूत्या अथो सवितैव ऽस्मै प्रजाभ्यः प्रसुवति वारुणो यवमयो दशकपालः सूतस्य गृहे मारुतः सप्तकपालो वैश्यस्य ग्रामण्यो गृह इति सूतमुखा वै विट् क्षत्रमुपतिष्ठते सूतमुखां वावास्मा एतद्विशं मुखतो ऽन्नाद्यायोपदधाति पौष्णश्चरुर्भागदुघस्य गृह इति पुष्टिर्वै पूषा पुष्टिमेवास्य भागे दधाति वैष्णवस्त्रिकपालस्तक्षरथकारयोर्गृह इति विष्णुर्वै यज्ञो यज्ञ एव प्रतितिष्ठति रौद्रो गावीधुकश्चरुरक्षावापस्य गृहे गोविकर्तस्य चैत्यन्तत एवास्मात्तेन रुद्रं निरवदयते ऽथो रुद्र इव उ ह्येतौ पशू अभिमन्येते एकादश वा एतानि हवींष्येकादशाक्षरा त्रिष्टुब्वीर्यं त्रिष्टुब्वीर्य एव प्रतितिष्ठति नाना वा एत एतेषामाशिषो ऽवरुन्धते यत्सह निर्वपेयुरत्निनः स्युरैन्द्र एकादशकपालो राज्ञो गृह इतीन्द्रियं वा इन्द्र एकधा वा एतद्यजमाने यज्ञस्याशीः प्रतितिष्ठत्यैन्द्रो हि यजमानः॥८॥

Vgl. 2, 6, 5 — TBr 1, 7, 3, 1—7

इन्द्रायांहोमुचा एकादशकपालं निर्वपेद्यदेव किंचार्वाचीनं जनितोरेनः करोति तत एनमंहोमुङ् मुञ्चतीन्द्राय सुत्राम्ण एकादशकपालं य एवोपवादी यो ऽभिदासति तत एनं सुत्रामा त्रायते ऽथैतन्मैत्राबार्हस्पत्यं सत्यं वै मित्रो ब्रह्म बृहस्पतिः सत्यं चैव ब्रह्म चालभ्य दीक्षते क्षत्रं वै मित्रो ब्रह्म बृहस्पतिः क्षत्रं चैव ब्रह्म चालभ्य दीक्षते यस्य राष्ट्रं शिथिरमिव स्यात्तमेतेन याजयेन्मैत्राबार्हस्पत्येन क्षत्रं वै मित्रो ब्रह्म बृहस्पतिर्ब्रह्मणि वा एतत्क्षत्रं प्रतिष्ठापयति दृढिम्ने ऽशिथिरत्वायाथैते देवस्व एते वै देवानां सूता एते

1) So corrigirt, die Mss (d. h. H u. Bb) तक्षरथकारयो°, M u. Bl ohne Accent, cf aber auch oben 2, 6, 5   2) M पशूनभि° (u. Bl)

सर्वपतय एते सर्वस्येशते तं एनं सुवते तस्माद्वा एतमाहुः पूर्वेद्युर्वा एष सूयते ऽभितश्व[1] सिच्यता इत्येषैष मारुत एकविंशतिकपालस्त्रिर्वै सप्त सप्त मरुतो विशो मरुतो विशो वा एतन्मध्यतः सूयते तस्माद्वा एष विशः प्रियो विशो हि मध्यतः सूयते वरुणस्य वा अभिषिच्यमानस्येन्द्रियं वीर्यमपाक्रामत्तत्त्रेधाभवद्भृगुस्तृतीयमभवच्छ्रायन्तीयं तृतीयं सरस्वती[2] तृतीयं प्राविशद्यद्भार्गवो होता भवति श्रायन्तीयं ब्रह्मसामं सारस्वतीरापस्तदेवेन्द्रियं वीर्यं तेज आप्नोति वाचा वा एतमभिषिञ्चन्ति यमभिषिञ्चन्ति वाक्सरस्वती सारस्वतीरापो यत्सारस्वतीभिः सूयते यावत्येव वाक्तया सूयते ॥ ९ ॥

Vgl 2 6 6 — TBr 1 7, 3, 7 flg

अपां वा एतानि चित्राण्यपां वा एतच्चित्राणि संभरन्त्यपामेनं चित्रैरभिषिञ्चन्ति[3] चित्रमस्मिन्दधति[4] तस्माद्वा एषो ऽभिषिक्तश्चित्रं राजेति श्रूयते ऽपां ह्येनं चित्रैरभिषिञ्चन्ति चित्रमस्मिन्दधति[5] यथा वा इदं मधुकृतो[6] मधु संभरन्त्येवं वा एतदपामोषधीनां रसं संभरन्त्यपामेनमोषधीनां रसेनाभिषिञ्चन्ति रसमस्मिन्दधति[7] तस्माद्वा एतमाहुरसी[8] राजा पुण्या इत्यपां ह्येनमोषधीनां रसेनाभिषिञ्चन्ति रसमस्मिन्दधति[9] वरुणसवो वा एष वारुणीरापो यदद्भिरभिषिञ्चति वरुणमेवैनमकर्विषुवान्वै सरस्वती सारस्वतीरापो यत्सारस्वतीभिः सूयते

---

1) So corrigirt, M भितुश्च H u Bb भितुश्च, desgl B ohne Accent 2) So die Mss 3) H u Bb °ञ्चति 4) In M das दधति wie es scheint nachträglich zu दधाति corrigirt, Bb दधाति 5) Bb दधाति 6) Bb मधुकृतो 7) So M, die andern Mss दधाति 8) So M, in H u Bb °रासीद्, desgl B, ohne Accent 9) So M, die andern Mss दधाति

विषुवान्भवति षोडश ग्रहा गृह्यन्ते षोडश होमा हूयन्ते तद्द्वात्रिंशद्द्वात्रिंशदक्षरानुष्टुब्वागनुष्टुब्वाचैवैनं वाक्यया सूयते ॥ १० ॥

Vgl TBr 1, 7, 5, 5

## ॥ इति[1] खिलकाण्डे[2] तृतीयः प्रपाठकः ॥[3]

---

प्रतीपमन्य ऊर्मिर्युध्यत्यन्वीपमन्यो मिथुनत्वाय यत्तस्य गृह्णाति यः प्रतीपं युध्यत्योजसा वा एष वीर्येण प्रतीपं युध्यत्योजसा वा एतद्वीर्येण राष्ट्र ओजो वीर्यं दधात्यथ यत्तस्य गृह्णाति यो ऽन्वीपमीरयति माहियं तेन तोकं प्रजनयत्यथ यन्नदीपतेरपां वा एतन्मिथुनमपां वा एतन्मिथुनेन राष्ट्रे मिथुनं दधात्यथ यदमहावरीणां मध्यमेष्ठेयं तेनावरुन्द्धे ऽथ यत्परिवाहिणीनां परिवस्यन्त्यास्तेन[4] तोकं प्रजनयत्यथ या आपो ऽग्नेरा ओजसा वा एता वीउर्येणापो ऽग्नेरा ओजसा वा एतद्वीर्येण राष्ट्र ओजो वीर्यं दधात्यथ यत्कूप्यानामुभयीस्तेनापो ऽवरुन्द्धे याश्च समुद्रिया याश्चासमुद्रिया ईश्वरा वा एतमेता स्रोतउस्या आपो ऽशान्ता निर्मृजो यत्स्थावराणां गृह्णाति शान्त्या अनिर्मार्गाय या आतपति वर्षति याश्च परिदहन्ने[5] ता आपो ब्रह्मवर्चउस्यास्ताभी[6] राष्ट्रे ब्रह्मवर्चसं दधात्यथ यद्भ्रादुनीना°[7]

---

1) Das इति fehlt in den Mss 2) B fügt hier ein चरातीयक, H u Bb चरातीय 3) In M lautet die Unterschrift irrig द्वितीय प्रपाठक समाप्त 4) So M, in B परिवस्यत्यास्, H u Bb परत्वस्यत्यास् 5) So M, die andern Mss. °र्दहश्चे 6) So corrigirt, die Mss ताभि 7) M यभ्रादुनीना°, H u Bb यत् द्रादुनीना°, desgl B, ohne Accent

विशस्तेन वीर्यमवरुन्द्धेऽथ यत्पुष्पाणामारण्यं तेनाथ यदुल्व्यानाꣳ वज्रो वै पशवो वज्रा उल्व्या वज्रेण वा एतद्राष्ट्रे वज्रं दधात्यथ यत्पयसः पयसा वा एतद्राष्ट्रे पयो दधात्यथ यद्घृतस्यैता वा आपोऽनाधृष्यास्ताभी[1] राष्ट्रमनाधृष्यं करोत्यथ यन्मधोरपाꣳ वा एष ओषधीनाꣳ रसोऽपाꣳ वा एतदोषधीनाꣳ रसेन राष्ट्रे रसं दधाति षोडश वा एते ग्रहाः प्राजापत्याः समानीतः सप्तदशः प्रजापतिः सप्तदशः प्रजापतिमेवाप्नोति ॥ १ ॥

Vgl 2, 6, 7 — TBr 1, 7, 5

देवीरापो मधुमतीः सꣳसृज्यध्वं महि क्षत्रं क्षत्रियाय वन्वाना इत्येता हि क्षत्रस्य वन्वतीरनाधृष्टाः सीदतोर्जस्वतीर्महि वर्चः क्षत्रियाय दधतीरित्येता हि क्षत्रस्य धात्रीरनिभृष्टमसीत्यनिभृष्टꣳ[2] ह्येव राष्ट्रमकस्तपोजा इति तपोजा हि राष्ट्रꣳ सोमस्य दात्रमिति सोमस्य ह्येतद्दात्रꣳ शुक्रा वः शुक्रेण पुनामि चन्द्रा वश्चन्द्रेण पुनामीत्यायुर्वै हिरण्यमायुष्या एवैना अकर्वर्चो वै हिरण्यꣳ वर्चस्या एवैना अकर्देवो वः सविता पुनात्वच्छिद्रेण पवित्रेणेत्येते वा अच्छिद्रं पवित्रꣳ यत्सूर्यस्य रश्मयोऽच्छिद्रेणैवैनाः[3] पवित्रेण पुनाति स्वाहा राजसूया इति राजसूया ह्येताः सधमादो द्युम्न्या[4] ऊर्जा एका इति व्यानयति वारुण्या वारुणीर्ह्यापः स्वयैव देवतया रुद्र यत्ते गिरिपरं नामेति रुद्रमेवास्मात्तेन निरवदयते तस्मिन्हुतमसि यमेष्टमसि स्वाहेति मृत्युर्वै यमो मृत्युमेवास्मात्तेन निरवदयते सोमो इन्द्रो वरुणो मित्रो अ-

1) So corrigirt, die Mss ताभि   2) So meine Correctur, die Mss °सीत्यनि
3) H u Bb °वैना°   4) In M entweder so oder दुम्न्या, Bb द्युम्ना, H द्यूम्ना, B द्युम्न्या, cf 2, 6, 8 In TBr 1, 7, 6 4 सधमादो द्युम्निनीरूर्ज एता इति

मित्रे देवा धर्मधृतो धर्मं धारयन्तीत्येते वै देवा धर्मधृतो यदिमे प्राणा यदेनमेतेभ्यो ऽप्रोच्याभिषिञ्चेयुरपरोधुका एनꣳ स्युरथ यदेनमेतेभ्यः प्रोच्याभिषिञ्चन्ति तथा हैनमनपरोधुका भवन्ति पर्णस्य वा अंसे ऽन्ते ब्रह्म समवदन्त तद्गावं सुश्रवा यत्तदशृणोत्पर्णमयेनाभिषिञ्चति ब्रह्माभिषिञ्चति ब्रह्मवर्चसेनैवैनमभिषिञ्चत्यथो ब्रह्म वै ब्रह्मा ब्रह्मणैवैनं ब्रह्माभिषिञ्चत्याश्वत्थेन वैश्यो विशो वी३र्यमपाक्रामत्तदश्वत्थं प्राविशत्तेन वीर्येण भर्भराभवत्तद्विश एवैतेन वी३र्यमवरुन्ध औदुम्बरेण भ्रातृव्या ऊर्ग्वा उदुम्बर ऊर्जꣳ वा एतदन्नाद्यꣳ यजमानो भ्रातृव्यस्य वृङ्क्ते यो जन्यो मित्रꣳ स नैयग्रोधेन मित्रेण वै क्षत्त्रꣳ व्यततनमवरोधैर्न्यग्रोधो मित्रेण वा एतत्क्षत्त्रꣳ व्यतनोति दृढिम्ने ऽशिथिरत्वाय ॥ २ ॥

Vgl 2, 6, 3 — TBr 1, 7, 6, 1—4

क्षत्त्रस्य योनिरसि क्षत्त्रस्योल्बमसि क्षत्त्रस्य नाभिरसीतीन्द्रो वै यदजायत तस्य वा एष योनिरासीद्यत्तार्प्यमुल्बं[2] पाण्डरं[3] नाभिरुष्णीषः[4] सूतवशाया अध्यजायत सूना चतुःपद्यूधरासीन्नीवाराः पीयूषस्तस्मान्नैवारः पुरोडाशः पञ्चाशतमन्यस्मिन्नक्षण्यानक्त्येकपञ्चाशतमन्यस्मिन्शतायुर्वै पुरुषः शतवीर्य आयुरेव वीर्यमाप्नोत्यप उपस्पृशत्यमृतꣳ वा आपो ऽमृतेनैवैनꣳ सꣳरम्भयत्याविन्नो अग्निर्गृहपतिरिति गार्हपत्यायैवैनमावेदयत्याविन्न इन्द्रो वृद्धश्रवा इतीन्द्रियꣳ वा इन्द्र इन्द्रियायैवैनमावेदयत्याविन्नौ मित्रावरुणौ धृतव्रता इत्यहोरात्रे वै मित्रावरुणा

1) H u Bb नैय्य° 2) M °मुल्व्य 3) So M, desgl. B, ohne Accent, in H u Bb पाण्डुर 4) So M, in H °न्नर्चिष्णा°, desgl. Bb u B, ohne Accent 5) So M, die andern Mss (H, Bb, B) उपस्पर्शयत्य°

अहोरात्राभ्यामेवैनमावेदयत्यविते द्यावापृथिवी घृतावृधा इति द्यावापृथिवीभ्यामेवैनमावेदयत्यवित्तः पूषा विश्ववेदा इति पशवो वै पूषा पशुभ्य एवैनमावेदयत्यवित्ता देव्यदितिरित्यादित्या वा इमाः प्रजास्ताभ्य एवैनमावेदयत्यवित्तो ऽयमसा आमुष्यायणो ऽमुष्याः पुत्रो ऽमुष्यां विशीति विश एवैनमावेदयति तस्माद्वा एष विशः प्रियो विशे ह्येनमावेदयत्येष ते जनते राजेति जनताया एवैनमावेदयति सोमो ऽस्माकं ब्राह्मणानां राजेति ब्रह्मोद्धरति सर्वेभ्य एवैनमन्येभ्यो भूतेभ्य आवेदयति ब्रह्मोद्धरति तस्मादाहुर्ब्रह्मोद्धृतमिति ब्रह्म उद्धरतीन्द्रस्य वज्रो ऽसि वार्त्रघ्नस्त्वयायं वृत्रं वध्यादिति धनुः प्रयच्छति वज्रो वै धनुर्वज्रो राजन्यो वज्रेणैव वज्रं समर्धयति शत्रुबाधनाः स्थेति बाणवतो ऽन्तो वै बाणवन्तो ऽन्तो राजन्यो ऽन्तेनैवान्तं समर्धयति त्रीन्प्रयच्छति तिस्रो वै शरव्या दिव्या[1] पार्थिवा[2] समुद्रिया ता अस्माद्योयाव पातं प्राञ्चं पातं प्रत्यञ्चं पातं तिर्यञ्चं पातान्वञ्चं पातोर्ध्वं दिग्भ्य एनं पातेति दिग्भ्य एनं पान्ति मित्रो ऽसीतीममभिमन्त्रयते मित्रस्य ह्येतद्रूपं वरुणो ऽसीतीमं वरुणस्य ह्येतद्रूपं हिरण्यवर्णमुषसो व्युष्ट इत्युद्यता[4] अभिमन्त्रयतोर्ध्वबाहुं तिष्ठन्तमभिषिञ्चति बृहत्साम भवति स्वर्गमेवैनं[5] लोकमभिसंतनोति ॥ ३ ॥

Vgl 2, 6, 9 — TBr 1, 7, 6, 4 flg

दिश एनं व्यास्थापयति वज्रेण वा एतदिमा दिशो ऽभिजयति

---

1) So corrigirt, die Mss दिव्यां 2) So M, die andern Mss पार्थिवा 3) So M, H u Bb एवैनं, desgl B, ohne Accent 4) So M, Bb इत्युप्यता, H इत्युप्यतां, desgl B, ohne Accent 5) H u Bb स्वर्गमे°

तस्माद्वा एतस्य सर्वा दिशोऽभिजिता याᳲयामभिपर्यावर्तते दिशो वै स्वर्गो लोक एतद्वे३न्या वा इमा दिशो यथादेवतं वा एतदाभ्यो दिग्भ्योऽधि स्वर्गं लोकमेति सोमस्य त्विषिरसि त्विषिमन्तेव मे त्विषिर्भूयादिति व्याघ्रचर्मं[1] विवेष्टयति सोमे वा एका त्विषिर्व्याघ्र एका सर्प एका ता एवावरुन्द्धे प्रत्यस्तं नमुचेः शिर इति सीसं पराङ्गाय[2] प्रत्यस्यति पाप्मा वै नमुचेः शिरः पाप्मानं वावासा एतत्प्रत्यस्यति स्वर्गं लोकमभ्यारोहन्नवेष्टा दन्दशूका[3] इति लोहितायसं केशवापाय दन्दशूकानेवास्मात्तेन[4] निरवदयते तस्माद्वा एतस्य नाभिचारोऽस्ति यावन्तो हि मृत्यवस्तानस्मान्निरवदयते मृत्योः पाहीति रजतं रुक्ममधस्तादुपोहते मृत्योर्वा एतद्रूपं यद्धा३ग्नोऽमृतं हिरण्यममृतेनैव मृत्युमन्तर्धत्ते दिदिवः[5] पाहीति हरितं रुक्ममुपरिष्टादध्यूहते दिव्याया एवैनमशन्या योयावेयं वै रजतासौ हरिण्याभ्यामेवैनं[6] परिगृह्यायुर्वै हिरण्यमायुष्या एवैनमभ्यतिक्षरन्ति वर्चो वै हिरण्यं वर्चस्या एवैनमभ्यतिक्षरन्ति वरुणस्य वा अभिषिच्यमानस्याप इन्द्रियं वीर्यं निरघ्नन्यद्रुक्ममन्तर्दधातीन्द्रियस्य वीर्यस्यानिर्घाताय शतमानो भवति शतक्षरः शतायुर्वै पुरुषः शतवीर्य आयुरेव वीर्यमाप्नोति ॥ ४ ॥

Vgl 2, 6 10 — TBr 1, 7, 7, 1—3, 1, 7, 8

अथैतानि पार्थानि संवत्सरो वै पार्थानि संवत्सरं वा एतन्मध्यतः प्रविशति तस्माद्वा एष दुःपराणोदः संवत्सरं हि मध्यतः

---

1) So M, die andern Mss °चर्म 2) So M, desgl B ohne Accent, H पंडगाय, Bb उपगाय 3) M °शूंका 4) M °शुकानि° 5) Vgl 2, 6 10, TBr 1, 7, 8 2 दिद्योंमा पाहि 6) B हिरण्या°

प्रविशति गिरी वा एतौ राजसूयस्य बार्हस्पत्यमन्येषामुत्तमं भवत्यैन्द्रमन्येषां प्रथमं वी३र्यं वै बृहस्पतिर्वी३र्यमिन्द्रो वीर्य एवैनमभिसंधत्त आदित्यनामानि वा एतान्यादित्या वा इमाः प्रजास्ताभ्य एवं सूयते सोमस्य त्वा द्युम्नेनाभिषिञ्चाम्यग्नेस्तेजसेन्द्रस्येन्द्रियेण विश्वेषां त्वा देवानां क्रतुनाभिषिञ्चामीत्येतैरेवैनमिन्द्रियै रेताभिर्देवताभिरभिषिञ्चतीन्द्रस्य योनिरसि जनयेत्येतो वा अधीन्द्रो ऽजायत स्वादेवैनं योनेर्जनयत्यति दूर्पाहीत्याह स्वर्गस्य लोकस्य समष्ट्यै समाववृत्रन्नधरागुदक्ता[1] इति समुन्मार्ष्टीन्द्रियं वा एतद्वीर्यमभिषिच्यमानस्य व्येति तदेव समुन्मार्ष्टि तेनैनं समर्धयत्यैन्द्र्या[2] त्रिष्टुभा ब्रह्मान्वेत्यैन्द्रो वै राजन्यस्त्रिष्टुप्छन्दाः स्वेनैवैनं छन्दसान्वेत्यथो प्रजापतिर्वै ब्रह्मा यज्ञस्य प्रजापतेरधीन्द्रो ऽसूयत प्रजापतेरेवाधि सूयत इन्द्रस्य वज्रो ऽसि वाजसनिस्त्वयायं वाजं सेदिति रथमुपावहरति स्वयैव देवतया मित्रावरुणयोस्त्वा प्रशास्त्रोः प्रशिषा युनज्मीति युनक्ति स्वयैव देवतया विष्णोः क्रमो ऽसि सपत्नहेति रथमभ्यातिष्ठत्येतो वै विष्णुरिमांल्लोकानुदजयद्विष्णोरेवोज्जितिमन्विमांल्लोकानुज्जयत्येभ्यो लोकेभ्यो भ्रातृव्यं नुदते मरुतां प्रसवे जयेति मारुत एव गणो भूत्वोज्जयति राजन्यं जिनात्यन्तमेवाक्रमीत्तदस्य न कश्चनाज्येयं उज्जिष्यते तस्मै तामिषुमस्यति तदस्यामोघायास्तमभूदाप्नं[3] मनः समिन्द्रियेणेत्युक्त्वा वर्तते ऽन्तमेव गत्वावर्तत आत्मनो ऽहिंसाया एवं वज्रो वाजसातमस्तेन नौ पुत्रो वाजं सेदिति पत्न्यै धन्वा-[4]

---

1) So M, H u Bb (cf 2 6, 11) 2) So M, in H u Bb °त्यैन्द्रोया, desgl B, ohne Accent 3) So M, in B °मोघायस्तम°, H u Bb °मेधायस्तम° 4) H धन्वर्ति

र्ति प्रयच्छत्येयं वै पन्था यज्ञस्यान्वारम्भः सह स्वर्गे लोके भवतः ॥ ५ ॥

Vgl. 2, 6, 11 — TBr. 1, 7, 7, 4 flg.; 1, 7, 8 u 9 u A

इयदस्यायुरस्यायुर्मे धेहीत्यायुरेवास्मिन्दधाति युङ्ङसि वर्चो ऽसि वर्चो मे धेहीति वर्च एवास्मिन्दधात्यूर्गस्यूर्जं मयि धेहीतीयं वै रजतासौ हरिणी इमे एवालभ्यौर्ग्वा उदुम्बर ऊर्जं वा एतन्मध्यत आत्मनो धत्ते प्रजानां च मित्रो ऽसीतीममुपावहरति मित्रस्य ह्येतद्रूपं वरुणो ऽसीतीमं वरुणस्य ह्येतद्रूपं समसि समहं विश्वैर्देवैरिति हस्ता आमिक्षामभ्यवहरति[1] सह्वा आमिक्षा सदेवाभ्यवहरति[2] तच्च ते हिरण्यं[3] ददाति सा दक्षिणा हिनस्ति खलु वा एष पशून्पृथिवीमभ्यवरोहन्नमो मात्रे पृथिव्या इति वाराही उपानहा अभ्यवरोहत्यारण्यानेव पशूनभ्यवरोहति वराहे ऽस्त्वेवैतं[4] संग्धुमहीति तद्वराहे एवैनं सघ्नोति[5] प्रति त्यन्नाम[6] राज्यमधायि स्वां तनुवं वरुणो ऽसुषोदिति[7] वरुणसवो वा एष वरुणायैवैनं प्राह नि चित्तो जरिमाणं न आनडिति जरिमाणमेवास्मिन्युनक्ति स्योनासि सुषदेति स्योना ह्येषा[8] सुषदा[9] स्योनामासीद सुषदामासीदेति[10] सुषदैवैनं[11] सादयति ॥

निषसाद धृतव्रतो वरुणः पस्त्यास्वा।
साम्राज्याय सुक्रतुः ॥

1) Bb आमिचा अभ्यव°, auch H आमि° 2) M सदेषा अभ्यव° 3) H u Bb हिरण्य 4) So M, die andern Mss वराहौस्त्वेवैनं 5) So M, die andern Mss सम्नोति 6) So M, die andern Mss त्यं नाम, cf 2, 6, 12 7) So corrigirt, die Mss सुखोदिति, cf 2, 6, 12 8) Die ह fehlt in den Mss 9) So corrigirt, die Mss सुखदा 10) So corrigirt, die Mss सुखदाम° 11) So corrigirt, M सुखदै°, die andern Mss सुखदे°

इति वरुणसवो वा एष वरुणमेवैनमकरग्नये स्वाहा सोमाय स्वाहेन्द्रस्यौजसे स्वाहा मरुतां बलाय स्वाहेति रथविमोचनीयं जुहोति यजुषैव युञ्जन्ते[1] यजुषा विमुच्यन्ते[2] हंसः शुचिषद्वसुरन्तरिक्षसदिति रथं वा एतत्परिवदति[3] सह सारथिना रथवाहने रथमादधाति सर्वत्वायैवं प्रसवाय ब्रह्मा३[4]न्त्वं ब्रह्मासीति किमभूः किमभूरिति वा एतदाह सवितासि सत्यसवा इतीदमसीदमसीति वा एनमेतदाह यद्वज्रवत्येष वज्रस्तेन मे रध्येति स्फ्यं प्रयच्छति वज्रो वै स्फ्यो वज्रेण वा एतद्राष्ट्रं रध्यते तमवरस्मै प्रयच्छति तेनावरस्मं राष्ट्रं रन्धयमाण एति तस्माद्वा एत एतस्मा अवरस्मं राज्ञे बलिं हरन्ति तेन स्फ्येनाधिदेवनं कुर्वन्ति तत्र पष्ठौहीं विदीव्यन्ति[6] आशा वा एष उपाभिपिञ्चत आशा पष्ठौ३ह्याशामेवास्मा अकस्ततश्चतुःशतमक्षाणवोह्याह ॥ उद्भिन्नं राज्ञः ॥ इति चत्वारो वै पुरुषा ब्राह्मणो राजन्यो वैश्यः शूद्रस्तेषामेवैनमुद्भेदयति ततः पञ्चाक्षान्प्रयच्छन्नाह दिशो अभ्यभूदयमितीमा एवास्मै पञ्च दिशो ऽन्नाद्याय प्रयच्छति क्षेत्रं ददाति तेन क्षेत्रे धृतो भवति वरं वृणीते सो[8] ऽस्मै कामः समृध्यते यत्कामो भवति मङ्क्ष्णुनाम्नो[9] ह्वयति मत्पूर्वं व्याहार्य[10] तंत्रैन्मोधमसदित्यसा[11] अमुष्य पुत्रो ऽमुष्यासौ पुत्र इति नामनी व्यतिपजति स्वर्गस्य लोकस्य समष्ट्यै ॥ ६ ॥

Vgl 2, 6, 12 — TBr 1 7 9, 5 u 6, 1 7, 10

---

1) H u Bb युञ्जते 2) Bb मुचते 3) So corrigirt, in den Mss परिवदति ohne Accent 4) Die ३ fehlt in den Mss, cf 2 6 12 5) So corrigirt, die Mss स्फैना॰ 6) So M, die andern Mss वेदाव्यन्त 7) d h अव । कृष्ठ । आह । 8) So corrigirt, die Mss सो 9) So ist wohl zu lesen, M मगल्पूनाम्नो, die andern Mss. मागस्नु-नाम्नो 10) So M die andern Mss व्याहारिय 11) So M, die andern Mss तर्म न्मोर्धमसादि॰

समानो वा एष यज्ञक्रतुः संवत्सरं भवति वि वा एतद्यज्ञस्यैव छिद्यते यदवभृथमवयन्ति यदपां नप्त्रे स्वाहोर्जो नप्त्रे स्वाहाग्नये गृहपतये स्वाहेति जुह्वत आयन्ति यज्ञस्य संतत्या अविच्छेदाय यज्ञो वै देवेभ्यस्तिरो ऽभवत्[1] देवाः संसृष्टमन्वैच्छंस्तान्सावित्रः[2] सवितृप्रसूता एवान्वैच्छन्यत्सारस्वतो वाग्वै सरस्वती वाचैवान्वैच्छन्यत्पौष्णः पशवो वै पूषा पशुष्वेवान्वैच्छन्यद्बार्हस्पत्यो ब्रह्म वै बृहस्पतिर्ब्रह्मण्येवान्वैच्छन्यदैन्द्र इन्द्रियं वा इन्द्र इन्द्रिय एवान्वैच्छन्यद्वारुणो वरुण एवान्वैच्छन्यत्त्वाष्ट्रः संवत्सरो वै त्वष्टा संवत्सर एवान्वैच्छन्यदाग्नेयो ऽग्निर्वै सर्वा देवता देवतास्वेवान्वैच्छन्यत्सौम्यः[4] सौमीर्वा ओषधय ओषधीष्वेवान्वैच्छन्यद्वैष्णवो विष्णुर्वै यज्ञो यज्ञ एवान्वैच्छंस्तं विष्णा अविन्दन्दशमे तस्मादेष दशमो दशमे ह्यविन्दन्दश चमसा दश चमसाध्वर्यवो दश दश चमसानभिता आ दशमात्पुरुषादन्वाचष्टे समृद्ध्यै दशसमृद्धो ह्येष यज्ञ एतं वै ते तं यज्ञमन्वैच्छंस्तमाप्नुवंस्तद्य एतेन यजत आप्नोति सप्तदशः सर्वो भवति प्रजापतिर्वै सप्तदशः प्रजापतिमेवाप्नोत्युत्सन्नयज्ञो वा एष संवत्सरो ह्यध्युत्सन्नयज्ञो ऽवरुध्यते संवत्सरादेवैनमध्याप्त्वावरुन्द्धे इन्द्रो वै वृत्रमहंस्तस्येमे रूमाण्युमैता चित्राणीयं नक्षत्राण्यसौ नक्षत्राणां वा अवकाशे पुण्डरीकं जायते क्षत्रस्य वा एतद्रूपं क्षत्रस्यैव रूपं प्रतिमुञ्चते द्वादशपुण्डरीका भवन्ति द्वादश मासाः संवत्सरः संवत्सरमेवाप्त्वावरुन्द्धे ॥ ७ ॥

Vgl 2, 6, 13 — TBr 1, 7 10 6 1 8 1 flg

1) Bb न्ते 2) So M, in H scheint es auch so corrigirt, B संसृष्ट°, Bb wohl संसृष्ट°, vgl. TBr 1 8, 1, 1 3) Dies Wort fehlt in H u Bb 4) Bb देवता देवता देवता एवान्वैछ°

रुक्मो होतुराग्नेयो वै होता न वा एतस्मै व्युछति ३व्येवास्मै वासयति संगुज्ञातुः[1] सौर्यो वा उद्गाताथो अमुमेवास्मा आदित्यमाग्नोन्नयति प्रावेपा अध्वर्योर्यमा[2] इव ह्यध्वर्युः[3] ॥ अश्वः प्रस्तोतुः प्राजापत्यो वा अश्वः प्राजापत्यः प्रस्तोताथो प्रेव ३ह्येषं प्रोथति[4] प्रेव प्रस्तोता धेनुः प्रतिहर्तुः प्रतीव ३ह्येषा हरति प्रतीव प्रतिहर्ता वशा मैत्रावरुणस्य वशं मा नयादित्यृषभो ब्राह्मणाच्छंसिनः सेन्द्रियत्वाय वासः पोतुः पवित्रत्वायानड्वान्नेष्टुरग्नीधो ऽन्यो[5] युक्त्या एव स्थूरि[6] यवाचितमच्छावाकस्य स्थूरीरिव[7] ३ह्येषा होत्रा स्व३ग्र्या यदच्छावाक्याथो निवेरुणत्वायैव यवा न वा अस्यै[8] तर्हि सदस्येभ्यो दक्षिणा दीयन्ते[9] त एवास्यै[10] तेनाभीष्टाः प्रीता भवन्ति द्वादश पष्ठौहीर्गर्भिणीर्ब्रह्मणो वाग्वै धेनुर्गर्भो मन्त्रो वा३ध्येवास्य मन्त्रं दधात्यामन्त्रणीयो ह भवति धेनुर्भव्या[11] भवन्ति द्वादश वै पयांसि तान्यस्मिन्दधाति तस्माद्वा एतमाहुः पयस्वी राजा पुण्या इति यावद्धि पयस्तदस्मिन्धीयते ॥ ८ ॥

Vgl. TBr. 1, 8, 2

घायन्तीयं ब्रह्मसाम भवत्यनुष्टुप्सु[12] यज्ञायज्ञियं प्रोहन्ति वारवन्तीयमग्निष्टोमसाममिन्द्रो वै वृत्रमहन्त्स ओजसा वीर्येण व्यार्ध्यत स एतत्सामापश्यत्तेनात्मानं समश्यत्तौजसा वा एष वीर्येण व्यृध्यते यो राजसूयेनाभिषिच्यते तदेतेनैवात्मानं संश्यते ब्रह्म वै यदग्ने

---

1) H u Bb स्रम॰ 2) M ॰र्यांर्येमा 3) M ॰ध्वर्यु 4) H u. Bb प्रोथयति 5) So M; die andern Mss न्यो 6) B स्थूरी, cf TBr 1 8, 2, 4 7) So M; die andern Mss स्थूरीरीव 8) So M, die andern Mss अस्ये 9) So M u. B, in H u Bb; दीयते 10) So M, H u Bb, in B एवास्मै 11) So betont M; in H u Bb धेनुर्भव्या 12) So M, H u. Bb भवत्य॰

व्यभवद्बृहत्साम[1] यजुस्तस्य वा एष रसो यद्यज्ञायज्ञियं यद्यज्ञायज्ञियं गायते ब्रह्मण्येव रसं दधाति वाचा वा एष व्यृध्यते यो राजसूयेनाभिषिञ्चते वागनुष्टुब्यदनुष्टुप्सु यज्ञायज्ञियं भवति वाच्येवास्य रसं दधातीन्द्रियेण वा एष वीर्येण व्यृध्यते यो राजसूयेनाभिषिञ्चत इन्द्रियं वीर्यं वारवन्तीयं यद्वारवन्तीयमग्निष्टोमसाम भवतीन्द्रियस्य वीर्यस्यावरुद्ध्या अश्वयन्वाव[2] श्यायन्तीयेनावारयन्त[3] वारवन्तीयेन तदिन्द्रियस्यैवैतेन[4] वीर्यस्य परिगृहीत्यै यच्च वा एनमदो दिशो व्यास्थापयति तत्स्वर्गं लोकमभ्यारोहति यदिमं लोकं पुनर्नोपावरोहेदतिजनं वा गच्छेदुद्वा माद्येद्यदेता दिशो संविश्य इमं वा एतं लोकं पुनरुपावरोहत्यन्नकामो यजेतैतद्देवत्या वा इमा दिशो यथादेवतं वा एतदाभ्यो दिग्भ्यो ऽध्यन्नाद्यमवरुन्द्धे यदि ब्राह्मणो यजेत बार्हस्पत्यं मध्ये निधायाहुतिमाहुतिं हुत्वाभिघारयेद्यदि वैश्यो वैश्वदेवं यदि राजन्य ऐन्द्रमेकधैवास्मिन्नन्नाद्यं प्रतिष्ठापयति समानो वा एष यज्ञक्रतुः संवत्सरं भवति वि वा एतद्यज्ञश्छिद्यते यत्संतिष्ठते यदेताः प्रयुज[5] उपैति सायमन्याः प्रातरन्या द्वौ वा ऋतू अहश्च रात्रिश्च ता एव प्रयुङ्क्ते षडन्याः षडन्याः षड्वा ऋतव ऋतूनेव प्रयुङ्क्ते ता उभयीर्द्वादश द्वादश मासाः संवत्सरः संवत्सरमेव प्रयुङ्क्ते ऽनड्वाही दक्षिणा युक्ता एव मारुती पृश्निः पष्ठौही गर्भिणीति

*विड्वै मरुतो विशो वा एनमेतद्गर्भं करोति तस्माद्वा एष विशः प्रियः*

प्रियो हि गर्भ आदित्यांशा[6] मलिहा[7] गर्भिणीतीयं वा अदितिरस्या

1) So corrigirt, die Mss °दृकसाम 2) So im Anschluss an M ऋंश्चयन्वाव, H u Bb ऋेवश्चावयित्वाव, desgl B, ohne Accent. 3) So M, die andern Mss श्यावयन्तीये° 4) So M, die andern Mss °स्यैवैतेन 5) So M, H u Bb प्रयुज, desgl. B, ohne Accent. 6) Die Mss. °त्यांशा 7) So ist wohl zu betonen, M मलिहा, H u Bb मलिहा

वा एनमेतद्गर्भं करोति तस्माद्वा एष दुःपराणोदो ऽस्यां हि गर्भो ऽथैते सत्यदूताः प्रसवाय सावित्रो देवा असुरैर्विजयमुपयन्तो ऽश्विनोः पूषणि[1] सत्यं न्यदधत वाग्वै सरस्वती वाचा सत्यं प्रहिणोति ॥ अभ्यूषिषि राजाभूम्[2] ॥ इति ब्रह्मास्मै सुषुवाणाय दधति संवत्सरमग्निहोत्रं जुहोत्यनुसंतत्यै ॥ ९ ॥

Vgl TBr 1, 8, 2, 5, 1, 8, 3

अग्निष्टोममग्रे ज्योतिष्टोममाहरति यज्ञमुखं वा अग्निष्टोमो यज्ञमुखमेवालभ्य सवमाक्रमते ऽथैष त्रिष्टोमस्तस्य त्रिवृत्प्रातःसवनं पञ्चदशं माध्यंदिनं सवनं तेजो वै त्रिवृत्क्षत्रं पञ्चदशस्तेज एवास्य क्षत्रे दधाति न वा अत्रापि सप्तदशस्त्रायते प्रजापतिर्वै सप्तदशो यज्ञः प्रजापतिर्यद्यज्ञस्त्रायते तेन सप्तदशो ऽन्तरितः पञ्चदशं माध्यंदिनं सवनमेकविंशं तृतीयसवनमिति विड्वा एकविंशः क्षत्रं पञ्चदशो विशि वा वास्यैतत्क्षत्रं प्रतिष्ठापयामकः सर्वे चतुस्त्रिंशाः पवमाना अभिषेचनीयस्य त्रयस्त्रिंशद्देवतास्ता एवास्यैतेनाभीष्टाः प्रीता भवन्त्यथ य एष चतुस्त्रिंशः प्रजापतिर्वै चतुस्त्रिंशः प्रजापतिमेवाप्नोति स शरो वा एष स्तोमानामयथापूर्वं यद्विषमाः स्तोमा यत्समाः पवमानास्तेनैवास्य शरस्तेन यथापूर्वमात्मना वा अग्निष्टोमेन ऋध्नोत्यात्मना पुण्यो भवति प्रजा वा उक्थानि पशव उक्थानि यदुक्थ्यो ऽनुसंतत्यै यो वै सवादेति नैनं सव उपनमति यः सामभ्य एति पापीयान्सुषुवाणो भवति यानि देवराजानां सामानि यत्तेभ्यो नैति तेनैव सवान्नैत्येतानि वै सामानि यत्पृष्ठानि यत्पृष्ठान्युपयन्ति

1) H u Bb पूषणो 2) So M, die andern Mss °भूत् 3) So M u Bb, in H नैव°, desgl. B, ohne Accent

तेनैव सामभ्यो नैति' यानि देवराज्ञानाꣳ सामानि तैरस्मिंल्लोक ऋध्नोति' यानि मनुष्यराज्ञानाꣳस्तैरमुष्मिꣳस्तदुभयोरेवैतल्लोकयोर्ऋध्नोत्यस्मिꣳश्चामुष्मिꣳश्चोद्वतीषु सुवता' उद्वद्वा अनुष्टुभो रूपमानुष्टुभो राजन्यस्तस्मादुद्वतीषु सुवते' ऽनुष्टुप्प्रथमा भवत्यनुष्टुबुत्तमा' वाग्वा अनुष्टुब्वाचा वा एतं प्रयन्ति' वाचोद्यन्ति' सौर्यनुष्टुबुत्तमा भवति'[1] स्वर्गस्य लोकस्य समष्ट्या' एकविꣳशं केशवपनीयस्य बहिष्पवमानमेकविꣳशमभिषेचनीयस्योत्तममिति' विड्वा एकविꣳशः' क्षत्रꣳ सप्तदशो' विशो वा एतन्मध्यतः सूयते' तस्माद्वा एष विशः प्रियो' विशो हि मध्यतः सूयते'[2] यत्र वा एनमदो दिशो व्यास्थापयति तत्स्वर्गं लोकमभ्यारोहति' यदिमं लोकं पुनर्नोपावरोहेदतिजनꣳ वा गच्छेदुद्वा माद्येद्देवे प्रतीचीनस्तोम' इमꣳ वा एतं लोकं पुनरुपावरोहति ॥ १० ॥

Vgl TBr 1, 8, 7 u 8

॥ इति[3] खिलकाण्डे चतुर्थः[4] प्रपाठकः ॥

---

अपो वै वृत्रः पर्यशयत्ता या अत्यमुच्यन्त ता जीवा यज्ञिया' गिरिर्वै वृत्रो या अतिमुमुचाना धावन्ति ता जीवा यज्ञिया' यद्वहन्तीनां गृह्णाति या एव जीवा यज्ञियास्तासामेव गृह्णाति' प्रती-

1) M भवति 2) In den Mss dies Wort ohne Accent 3) Das इति fehlt in den Mss. 4) M schreibt fälschlich तृतीय

यमुपसमारयत्यंछम्बद्वाराय सूर्यस्यावकाशे गृह्णाति सैन्द्रा एवं गृह्णाति हविष्मतीरिमा आपा इति हविष्मतीरेवं गृह्णात्याविःसूर्ये गृह्णा[1] उत्तरमेवं यज्ञक्रतुमभिगृह्णात्यनुष्टुभा गृह्णात्यनुष्टुब्वै सर्वाणि छन्दांसि सर्वैरेवैनाश्छन्दोभिर्गृह्णाति[2] वर्ष्म वा एषा छन्दसां वर्ष्मैनं समानानां गमयति चतुर्भिर्गृह्णाति[3] त्रिभिः सादयति तत्सप्त सप्तपदा शक्करी शाक्कराः पशवः पशूनेवावरुन्द्धे ऽपो वै रात्रिर्दिवा भूते प्रविशति तस्मादापो दिवा कृष्णा अपो ऽहर्नक्तं तस्मादापो नक्तं शुक्ला यद्दिवा गृह्णात्युभे एवाहोरात्रे गृह्णाति दिवा वै मनुष्या यज्ञेन चरन्ति नक्तं देवास्तस्माद्रात्रिभिः[4] प्रवस्यते संस्थाप्य वै मनुष्या यज्ञं निःपद्यन्ता[5] आपः खलु वै विश्वे देवा यदपः परिहरन्त्यह्नो वा एतद्यज्ञं संमादादन्यस्ते ऽस्य यज्ञं क्रियते[6] यद्वै यज्ञस्यान्तर्यन्ति तच्छिद्रं तदनु रक्षांसि यज्ञमवयन्त्यापो वै रक्षोघ्नीरपो रक्षांसि न तरन्ति यदपः परिहरन्ति रक्षसामनन्ववायाय या दिवा गृह्णाति या अर्चीः प्रजास्तासामेता योनिस्ता एता अनुप्रजायन्ते या नक्तं गृह्णाति या आद्याः प्रजास्तासामेता योनिस्ता एता अनुप्रजायन्त उभयीरेवं प्रजाः प्रजनयत्यग्नीध्राउद्यामाग्नीध्रे सादयत्येतद्वा असनभिजितमथो अंच हि तां रात्रिं[7] देवता उपवसन्ति देवा वै यज्ञस्य ध्वस्तनं नापश्यंस्ते वा एतदेव यज्ञस्य ध्वस्तनमपश्यन्वसती[8]वरीर्यद्वसतीवरीर्गृहीत्वोपवसन्ति ध्वस्तनं वा एतद्यज्ञस्यालभ्योपव-

---

1) So M; in H u Bb सूर्ये गृह्णा 2) H °वैनाश्छ° 3) So M, in H u Bb das Verb ohne Accent 4) So M, die andern Mss. रात्रीभि° 5) So im Anschluss an M निःपद्यता, die andern Mss निपद्यता 6) So M, die andern Mss क्रोयते 7) So M u Bb, H रात्री, desgl B ohne Accent 8) In H u Bb findet sich वसतीवरी° nur einmal geschrieben

सत्यथो आपो वै विश्वे देवाः सर्वा वा एतद्देवता आलभ्योपवसन्ति यस्यागृहीताः सूर्यो ऽभिनिम्रोचेद्य आहिताग्निः सोमयाजी तस्य कुम्भाद्गृह्यास्तस्य[1] हि गृहीता अग्रिमुपरिष्टाद्धारयेयुरथ गृह्णीयाज्ज्योतिष्मतीरेवैना गृह्णाति हिरण्य॰ हस्ते भवत्यथ गृह्णाति सत्य॰ वै हिरण्य॰ सत्येनैवैना[2] गृह्णाति वरो दक्षिणा वरेणैवैना गृह्णाति यत्तत्र धनमदास्यन्स्यात्तद्देयम्[3] ॥ १ ॥

Vgl 1, 3, 1 — TBr 6, 4, 2 (vasativaryaḥ); Çat Br 3, 9, 2.

प्रचरण्यामग्रे गृह्णात्येषा ह्यग्रे प्रचरत्यथो वै सोमस्य रसः प्रविष्टो ऽग्निः सर्वा देवता वैश्वदेवीरापो यज्ञमुखं ग्रावाणः सवितृप्रसूतो वा एतत्सर्वाभिर्देवताभिरपो॰ सोमस्य रसमच्छैति शृणोत्वग्निः समिधा हवं मा इति यस्मिन्नेवाग्नौ जुहोति तमेतदाह शृण्वन्त्वापा इति या एवापो[4] ऽच्छैति ता एतदाह धिषणा च देवीति[5] वाग्वै धिषणा देवी[6] वाच॰ वा एतदाह शृणोत[7] ग्रावाणो विदुषो नु यज्ञमिति यज्ञमुखं॰ हि ग्रावाणः शृणोतु देवः सविता हवं मा इत्याह प्रसूत्या एव ॥ अपां इष्य होतः ॥ इति यज्ञं मे यो॰ ति[8] वा एतदाह ॥ म ब्रह्मणा इति ब्रह्मणैवं यज्ञमच्छैति मैत्रावरुणस्य चमसेनाच्छैत्येष ह्यग्रे प्रचरत्यथो मित्रावरुणौ ह्यपामीशाते यज्ञमुखं॰ वै मित्रावरुणौ यज्ञमुखमापो यज्ञमुखेनैव यज्ञमुखमच्छैति यच्च होतुः प्रातरनुवाकमनुब्रुवतः[9] उपशृणुयात्तदप्सु ऽध्वर्युर्गृह्णीयाद्यन्नोपशृणुयाद्बधिरः स्याद्वाचो हि

---

1) So B, nur ohne Accent; in M गृह्यात्तस्य, H u Bb गृह्यस्तस्य 2) Bb ॰वैना
3) H u. Bb देव 4) Die Mss एवापो 5) So M, (in gleicher Weise ist die Lesart mit M 1 oben 1, 3, 1 in den Text zu setzen), B धिषणा देवीति, Bb धिषणाश्च देवीति, H धिषणाश्च देवीति 6) So M, die andern Mss धिषणाश्च देवी 7) So M; die andern Mss. शृणोतु 8) So M, die andern Mss प्रैषेति 9) Bb ॰ब्रवत

छिद्यते' ऽथ यज्जुहोति हविर्भूता एवैना गृह्णात्यथो अभिघृता एव तूर्णं प्रास्य जुहोत्यग्निमत्येवं जुहोत्यायतनवत्यन्धो ऽध्वर्युः स्याद्यदनायतने जुहुयादृतं वै देवा वज्रं कृत्वा सोममघ्नन्नभि खलु वा एतां घारयन्ति[1] तस्मादाहुतिमपप्लावयत्यथो आहुतिं[2] नेद्धराणीति कार्यसीत्याहुतिमपप्लावयति समुद्रस्य वो ऽक्षित्या उन्नया इत्युपमारयत्यपामेवाक्षित्या अपो वै सोमस्य रसः प्रविष्टः[3] सोममपां रसो ऽपाञ्च खलु वै नपाच्चापां[4] सोमस्य रसस्येशाते तौ वा एतदाहुत्या भागधेयेनापां सोमस्य रसं निरयाचिष्टोभे अहोरात्रे वसतीवरीषु ग्रहीतव्ये३ इत्याहुः पूर्वेद्युरन्यां गृह्णाति पुरान्याः सूर्यस्योदितोस्तथास्योभे अहोरात्रे वसतीवरीषु गृहीते भवतः पूर्वेद्युरन्या गृह्णाति पुरान्याः सूर्यस्योदितोरुभयीरेवैनाः सद्योगृहीता[5] अकर्भ्रातृव्या वा एतां गृह्णन्ते या मैत्रावरुणस्य चमसे यांश्च निग्रा३भ्यास्ता उभयीरुपरिष्टाच्चात्वालस्य समनक्ति संज्ञानमाभ्यः करोति मित्रमाभ्यो ददाति चात्वालान्निर्गृह्णन्त एष वा अपां योनिः स्वादेव योनेर्निर्गृह्णन्तो ऽस्कन्नत्वाय ॥ अवेरपो ऽध्वर्यो३[6] ओम्[7] ॥ इत्यविदो यज्ञा३मिति[8] वा एतदाह ॥ उतेमनन्नमुरुतेम[9] पश्य ॥ अयं मे रद्ध इति वा एतदाह यद्यग्निष्टोमो जुहोति न वा अग्निमग्निष्टोमस्य स्तोत्रेण न शस्त्रेणातियन्त्यग्निष्टोममेव यज्ञक्रतुमनुसंतनोति यद्युक्थ्यः परिधिमनक्ति परे वा अग्नेः

1) So M, in H u Bb धारयति, B घारयति 2) So M, die andern Mss आहुति 3) M प्रविष्ट. 4) M नापाश्चा° 5) So M, während H u Bb सद्यो गृहीता accentuiren. 6) Die ३ als Zeichen der Plutirung fehlt in den Mss und ist von mir ergänzt 7) So M, in den andern Mss fehlt das ओम् sowie auch die folgende Interpunction 8) Die ३ als Zeichen der Plutirung fehlt in den Mss und ist von mir ergänzt 9) M उतेमनन्नमरु°, cf aber auch TS 6, 4, 3, 4

परिधयः पराणि परिधिभ्य उक्थान्युक्थान्येव यज्ञक्रतुमनुसंतनोति यद्यतिरात्र एतदेव यजुर्वदन्हविर्धानं प्रपद्येत परं वै परिधिभ्यो हविर्धानं परोक्थेभ्यो रात्री रात्रीमेव यज्ञक्रतुमनुसंतनोति स्तेनं मनो ऽनृतवादिनी वागथ केन सोमा गृह्यन्ते केन हूयन्त इति पृच्छेदेतं वै सत्यं हिरण्यमेतेनैव सत्येन गृह्यन्त ऋतेन हूयन्ते ॥ २ ॥

Vgl 1, 3, 1 — TS 6, 4, 3 (somopâvaharaṇam); Çat. Br 3, 9, 3, 14 flg

देवेभ्यो वै मनुष्येभ्यः स्वर्गाय लोकाय यज्ञ आह्रियते यद्ब्रूदे त्वेति तेन देवेभ्यो यन्मनसे त्वेति तेन मनुष्येभ्यो यदाह दिवे त्वा सूर्याय त्वेति तदनु यज्ञं स्वर्गं लोकं समारोहयति वि वा एतद्यज्ञश्छिद्यते यस्मै कमाह्रियते तद्येनमनु स्वर्गं लोकं समारोहयति यदाह दिवि देवेषु होत्रा यच्छेति होत्राभिर्वै यज्ञः संततो होत्राभिरेव यज्ञं संतनोति ॥ देवेभ्यः प्रातर्यावभ्यो ऽनुब्रूहि ॥ इति छन्दांसि वै देवाः प्रातर्यावाणश्छन्दोभ्यो वा एतदनुवाच आह पुरा वाचः प्रवदितोः प्रातरनुवाकमन्वाह यजमानायैव वाचं गृह्णाति न वा एतर्हि यजमानो हस्ताववनेनिक्ते यदप्सुमतीं प्रथमामन्वाह प्रातरवनेग्यो वा एष यजमानस्य यच वा अठ्दो ऽपः परिहरन्त्यग्नौ वा एतद्यज्ञं संप्रादाद्यदप्सुमतीं प्रथमामन्वाहाप्सु वा एतद्यज्ञं पुनरालभते सर्वेषां वै देवानां प्रातरनुवाक आपः खलु वै विश्वे देवा यदप्सुमतीं प्रथमामन्वाह सर्वा वा एतद्देवता आप्नोति सर्वा आप्नोति यथा वै सामिधेनीरेवं प्रातरनुवाक आसाद्य वै हविः सामि-

1) So M; in H u Bb उक्थ्यांश्युक्थ्यान्येव desgl. B, ohne Accent. 2) So M; in H u Bb परोक्थेभ्यो desgl B, ohne Accent 3) So corrigirt, die Mss प्रवदितो 4) Mit प्रातर्वा beginnt S. 61 von Bcn'

धेनीरन्वाहुरेतत्खलु वा एतर्हि हविर्यत्सोमस्तंसात्सोममुपावहृत्यान्वाह गायत्रीं च संपादयति जगतीं च तद्द्वे छन्दसी एकं छन्दोऽभिसंपादयति बृहतीं त्रिष्टुभं च ककुभं च तद्द्वे छन्दसी एकं छन्दोऽभिसंपादयति बृहतीमनुष्टुभं च पङ्क्तिं च तत्षट् छन्दांस्येकं छन्दोऽभिसंपादयति बृहतीमनुष्टुप्प्रतिपत्कानि[1] छन्दांसि कुर्याद्यज्ञावकीर्णस्य वाग्वा अनुष्टुब्वाचैवैनं भिषज्यति समया त्रिष्टुभं च जगतीं चानुब्रूयात्पशुकामस्य पशवो वै जगती पशुमान्भवति सर्वाणि छन्दांस्यन्वाह प्रजापतिर्वै छन्दांसि प्रजापतिमेवाप्नोति प्रजापतेर्वा एतदुक्थं[2] यत्प्रातरनुवाको व्युष्टायां पुरा सूर्यस्योदेतोरनुब्रूयादेष हि प्रजापतेर्लोकः पवित्रं वै प्रातरनुवाको यजमानमेवैतेन पुनाति शतमनुब्रूयादायुःकामस्य शतायुर्वै पुरुषः शतवीर्य आयुरेव वीर्यमाप्नोति सप्त च शतानि विंशतिं चानुब्रूयात्पशुकामस्यैतावन्ति वै संवत्सरस्याहोरात्राणि संवत्सरेणैवास्मै पशूनवरुन्द्धे सहस्रमनुब्रूयात्स्वर्गकामस्य यावद्वै सहस्रं तावदितो ऽसौ लोकः स्वर्गस्य लोकस्य समष्ट्या अपरिमिता अन्वाहापरिमितस्यावरुद्ध्यै पङ्क्त्यां परिदध्यात्युत्तरमेवं यज्ञक्रतुमभिगृह्णाति ॥ ३ ॥

Vgl 1, 3, 1 — TS 6, 4, 3, 1 a 2 (somopavaharaṇam), Çat Br 3, 9, 3, 4 flg

यज्ञस्य वा एताः पन्नेजनीः पुंसामभीत्स्त्रीणां[3] नेष्टा यदग्नीन्नेष्टुरुपस्थमासीदति मिथुनं वा एतत्संभवतो यन्नेष्टोप उपप्रवर्तयति तस्मिन्नेव मिथुने रेतो दधाति पत्न्युपप्रवर्तयति पत्न्या हि प्रजाः

1) So schreibe ich mit Ben und übersetze „die Anushtubh zum Eingang, zum Anfang habend“, M °प्रतिपक्कानि, H u Bb °प्रतिपत्यानि, B nicht ganz deutlich, etwa °प्रतिपत्कानि 2) So M u Ben, in H u Bb °दुकथ्य, desgl B, ohne Accent 3) So corrigirt, die Mss °मभी स्त्रीणा

प्रजायन्त ऊरुणोपप्रवर्तयत्यूरू ह्यनु प्रजाः प्रजायन्ते दक्षिणेनोरुणोपप्रवर्तयति दक्षिण३ ह्यूरुमनु प्रजाः प्रजायन्त उत्तरत उपप्रवर्तयत्यन्तरतो हि प्रजाः प्रजायन्ते यद्दक्षिणा प्रवर्तयेत्पितृलोक एना[1] न्निधुवेदंष[2] यदुदीचीरुपप्रवर्तयति मनुष्यलोकमेवैना उपप्रजनयति प्राजापत्यो वा उद्गाता संक्शाप्यमानो[3] वा उद्गाता पत्न्या रेत आदत्ते यदाह वाम्मी ते संदृशि विश्वं रेतो धेषीयेति तथा ह नादत्ते[4] द्वादशे स्तोत्र उपप्रवर्तयति द्वादश मासाः सꣳवत्सरो द्वादशमिष्टोमे[5] स्तोत्राण्यापः शान्तिर्यन्नलोप उपप्रवर्तयति शममत्येव देवस्य त्वा सवितुः प्रसव इति सवितृप्रसूत एवैनमादत्ते[6] ऽश्विनोर्बाहुभ्यामित्यश्विनौ वै देवानामध्वर्यू पूष्णो हस्ताभ्यामिति देवताभिरेव यावासीति रात३ ह्येष देवेभ्यः सोममध्वरकृद्देवेभ्य इत्यध्वर३ ह्येष देवेभ्यः करोतीन्द्राय त्वा सुषुत्तमं मधुमन्तं पयस्वन्तमित्यैन्द्रो हि यज्ञ इन्द्रं खलु वा एतर्ह्यन्या देवता अन्विन्द्राय त्वा वसुमते रुद्रवत इति वसवश्च ह्येनमेतर्हि रुद्राश्चान्विन्द्राय त्वादित्यवत इत्यादित्या ह्येनमेतर्ह्यन्वग्नये त्वा रायस्पोषद इत्यग्निर्वै सर्वा देवता एता ह्येनमेतर्हि देवता अनु विष्णवे त्वेति विष्णुर्हि यज्ञो व्यानो वा उपाꣳशुसवनः प्रजा अꣳशवो व्यानं वा एतत्प्रजासु दधाति श्वात्राः स्थ वृत्रतुरा इत्येष वा अपाꣳ सोमपीथ एतं वै विश्वामित्रो ऽपाꣳ सोमपीथं

---

1) M एना 2) So M u Ben., in H, Bb, B धुवेद॰ 3) So corrigirt (vgl. Monatsberichte d. Berliner Akad. d. Wiss. 24 Juli 1879, p. 693, Einleitung zum 1. Theil der Maitr. S. p. XI), die Mss. schwanken, Ben सष्याप्य॰, M सषाप्य॰, Bb सषाप्य॰, B सक्षाप्य॰ indem zugleich unter der Ligatur क्ष ein Rudiment des Buchstaben श angebracht zu sein scheint, H ist ganz undeutlich 4) M पाधत्ते 5) So H u. Bb, die andern Mss. ॰ष्टोमे 6) So H, Bb u. B (cf. TS 6, 4, 4. 1), M u. Ben एवैनाम॰ 7) H, Bb u. B schieben hier noch ein वै ein.

विदांचकार तस्मै सिन्धवो धोक्षमनमन्तापांꣳ वा एष सोमपीथोऽपां वा एतत्सोमपीथेन समर्धयति यो वा अपांꣳ सोमपीथंꣳ वेद न ह वा आस्वार्तिमार्छति करोत्यासु वीर्यंꣳ यत्ते सोम दिवि ज्योतिरिति सोमो वै वाजस्तस्य[1] चन्द्रमास्तृतीयमयंꣳ यः पवते स तृतीयंꣳ येन यजन्ते स तृतीयं गर्भानमुना[2] दाधार प्राणाननेन यद्यत्ययंꣳ यः पवते ऽन्नमनेन दाधार येन यजन्ते तस्य वै वाजस्य सत्यंꣳ[3] वाजिनमन्नंꣳ वाजिनं दक्षिणा वाजिनं ता वा अस्यैतत्तन्वः संभृत्य[4] तंꣳ सर्वंꣳ संतनुं[5] भूतमाप्याययन्ति वज्रो वै ग्रावा हनू अधिषवणे क्रूरमिव वा एतद्यज्ञे क्रियते यदाह धिषणे ईडिते ईडेथामिति शमयत्येव ॥ ४ ॥

Vgl 1, 3, 1 u 3 — TS 6, 4, 4 (somonmânam); Çat Br. 3, 9, 4

वसतीवरीभिः सोममाप्याययन्ति न हि सोमेन सोम आप्यायते ऽद्भिर्हि[6] सोम आप्यायते निग्राभ्याभिरुपांꣳशुमंतो[7] हीतरे सोमा गृह्यन्ते प्राणो वा उपांꣳशुरङ्गानीतरे यहा यदन्यंत आप्याययेयुः प्राणेन यज्ञंꣳ विछिन्द्युरष्टौ कृत्वः प्रातरभिषुणोत्यष्टाक्षरा गायत्री गायत्रीꣳ वा एतत्प्रातःसवने व्यापातयन्ति[8] देवाश्च वा असुराश्चास्पर्धन्त ते देवा उपांꣳशौ यज्ञंꣳ सꣳस्थाप्यमपश्यꣳस्तमुपांꣳशौ समस्थापयꣳस्तदुपांꣳशा एव यज्ञः सꣳस्थाप्यो[9] ऽष्टौ कृत्वः प्रातरभिषुणोत्यष्टाक्षरा गायत्री गायत्रीमेवाप्नोति यदेकादश त्रिष्टुभं तेन यद्द्वादश जगतीं

---

1) H u Bb रोजस् 2) H गर्भासिसना, Bb गर्भामिमनो 3) Ben schiebt hier ein वै ein 4) So M u Ben, in H u Bb संभृत्यस्तꣳ, B सभृत्यस्तꣳ 5) So Ben; in H u Bb सतनु; desgl B, ohne Accent, M संतन 6) So M, die andern Mss द्विर्हि 7) So Ben; in M °ꣳशुमंथो, in H u Bb °ꣳशु मंतो, B °ꣳशुमथो मो 8) So Ben u. M; in H u Bb व्याय° 9) Bb °स्थाप्य

प्रजायन्त ऊरुणोपप्रवर्तयत्यूरू ह्यनु प्रजाः प्रजायन्ते दक्षिणेनोरुणोपप्रवर्तयति दक्षिणं ह्यूरुमनु प्रजाः प्रजायन्तेऽन्तरत उपप्रवर्तयत्यन्तरतो हि प्रजाः प्रजायन्ते यद्दक्षिणा प्रवर्तयेत्पितृलोक एनान्निधुवेदथ यदुदीचीरुपप्रवर्तयति मनुष्यलोकमेवैना उपप्रजनयति प्राजापत्यो वा उद्गाता संकशायमानो वा उद्गाता मन्या रेता आदत्ते यदाह वामी ते संदृशि विश्वं रेतो धेषीयेति तथा ह नादत्ते द्वादशे स्तोत्र उपप्रवर्तयति द्वादश मासाः संवत्सरो द्वादशमिष्टोमे स्तोत्राण्यापः शान्तिर्यत्तर्हीप उपप्रवर्तयति शमयत्येव देवस्य त्वा सवितुः प्रसव इति सवितृप्रसूत एवैनमादत्तेऽश्विनोर्बाहुभ्यामित्यश्विनौ वै देवानामध्वर्यू पूष्णो हस्ताभ्यामिति देवताभिरेव ग्रावासीति रात्रे ह्येष देवेभ्यः सोममध्वरकृद्देवेभ्य इत्यध्वरं ह्येष देवेभ्यः करोतीन्द्राय त्वा सुषुत्तमं मधुमन्तं पयस्वन्तमित्यैन्द्रो हि यज्ञ इन्द्रं खलु वा एतर्ह्यन्या देवता अन्विन्द्राय त्वा वसुमते रुद्रवत इति वसवश्च ह्येनमेतर्हि रुद्राश्चान्विन्द्राय त्वादित्यवत इत्यादित्या ह्येनमेतर्ह्यन्वग्नये त्वा रायस्पोषद इत्यग्निर्वै सर्वा देवता एता ह्येनमेतर्हि देवता अनु विष्णवे त्वेति विष्णुर्हि यज्ञो व्यानो वा उपांशुसवनः प्रजा अंशवो व्यानं वा एतत्प्रजासु दधाति श्वात्राः स्थ वृत्रतुर इत्येषे वा अपां सोमपीथ एतं वै विश्वामित्रो ऽपां सोमपीथं

---

1) M एना 2) So M u Ben., in H, Bb, B धुवेद॰ 3) So corrigirt (vgl. Monatsberichte d. Berliner Akad. d. Wiss. 24 Juli 1879, p. 693; Einleitung zum 1 Theil der Maitr. S. p. XI), die Mss. schwanken. Ben ग्रस्याय॰, M मपाय्य॰; Bb संयाय्य॰; B मस्याय्य॰ indem zugleich unter der Ligatur स्य ein Rudiment des Buchstaben श angebracht zu sein scheint, H ist ganz undeutlich 4) M चोपते 5) So H u Bb; die andern Mss. ॰ष्टोमे 6) So H, Bb u. B (cf. TS 6, 4, 4, 1), M u. Ben एवैनाम॰ 7) H, Bb u. B schieben hier noch ein वै ein.

त्वा सुभव सूर्यायेति सूर्यदेवत्या हि सर्वे सोमा हूयन्ते ऽथो अन्नं वै देवानां प्रियास्त३न्वस्तां एवावरुन्द्धे देवेभ्यस्त्वा मरीचिपेभ्य इति रश्मयो वै देवा मरीचिपाः परिधयो रश्मयो ऽसा आदित्य आहवनीयस्तानेव प्रीणात्यूर्ध्वस्तिष्ठञ्जुहोत्यूर्ध्वो हि तिष्ठन्वीर्यवत्तरो यं द्विष्यात्तस्य जिह्मस्तिष्ठञ्जुहुयात्प्राणानस्य ह्लिनाति[1] विह्वारुको भवति यद्यभिचरेद्वा तमितो ऽस्तिष्ठेद्दीर्घामाहुतिमभित्वरमाणस्ताजंगन्नुगच्छति[2] यदि कामयेत वर्षेत्पर्जन्य इति परिमृज्योर्ध्वमुन्मृज्यादोषधीभ्यो वा एष ऽमुतो वर्षत्योषधीरेवं नैदीयो वृष्ट्या अकर्यदि कामयेत वर्षेत्पर्जन्य इति परिमृज्यावाचीनमवमृज्याद्वैश्वानरेणैव वृष्टिमपि हन्ति[3] नापिधेयो यदपिदध्यात्प्राणमस्यापिदध्यात्प्रमायुकः स्याद्यं द्विष्यात्तस्यापिदध्यात्प्राणमेवास्यापिदधाति यद्यभिचरेत् ॥ इदमहममुष्यामुष्यायणस्य प्राणमपिदधामि ॥ इत्यपिदध्यात्प्राणमेवास्यापिदधाति ॥ इदमहममुष्यामुष्यायणस्य प्राणे सादयामि ॥ इत्यभिचरन्सादयेत्प्राण एवास्य सादयति प्रमायुको भवति प्राणाय त्वेत्यनभिचरन्सादयेत् ॥ ५ ॥

Vgl 1, 3, 4 — TS 6, 4, 5 (grahah, upançvoh), Çat Br 4, 1, 1, 4, 1.2 21 flg, Kap S 41, 9 u 42, 1 u 2

पवित्रं वितन्वन्ति प्राणापानयोर्विधृत्या उपयामगृहीतो गृह्यते ऽपानेन वै प्राणो धृतः प्राणस्य धृत्या अन्तरिक्षं वा अन्तर्या३मो ऽन्तरिक्षमिमाः प्रजा यदेतं त्वांचं सूदवत्सादयति प्रजास्वेव रसं दधाति देवाश्च वा असुराश्चास्पर्धन्त ते देवा उपांशुमपश्यं स्तमगृह्णत

---

1) So Ben u M, die andern Mss क्लिनाति 2) So Ben u M, B °भित्वरमाण°, H u Bb °भिचरमाण 3) So Ben u M, die andern Mss °मप हति 4) So Ben u M, die andern Mss °दधाति

तेन त्रिर्विगृह्णाति त्रीणि वै सवनानि सवनान्येवाप्नोत्येतद्वा उपांशौ यज्ञं समतिष्ठिपंस्तेन संस्थितेनारिष्टेन भूतेन प्रचरन्ति त्रिर्विगृह्णाति त्रयो ३हीमे प्राणाः प्राणो ऽपानो व्यानो ऽथो त्रयो वा इमे लोका इमानेव लोकानाप्नोत्यसौ वा उपांशुरन्तरिक्षमन्तर्याम इयमुपयामो यदुपयामगृहीता गृह्यन्ते ऽनया वा एतद्गृह्यन्ते तदस्कन्ना वा ए३ते ऽनया हि गृह्यन्ते यत्स्थाल्या गृह्यन्ते ऽनया वा एतद्गृह्यन्ते ऽस्यां वा एषाधिक्रियते तदस्कन्ना वा ए३ते ऽनया हि गृह्यन्ते यद्दारुमयेण गृह्यन्ते ऽनया वा एतद्गृह्यन्त इयं हि वनस्पतीनां योनिस्तदस्कन्ना वा ए३ते ऽनया हि गृह्यन्त एष ते योनिरिति सादयतीयं वै सोमस्य योनिरस्याः सोमो ऽधि जायते स्व एवैनं योनौ दधातीयं वै देवपात्रं तद्य एवं वेद प्र वसीयसः पात्रमाप्नोति ब्राह्मणं तु[1] पात्रे न मीमांसेत यः पात्रिय[2] इव स्यादनुपयामगृहीतो गृह्यते ऽनुपयामगृहीतं हि प्रजाः प्राणमुपजीवन्त्यपवित्रपूतो गृह्यते ऽपवित्रपूतं हि प्रजाः प्राणमुपजीवन्त्यसन्नो हूयते ऽसन्नं हि प्रजाः प्राणमुपजीवन्ति पवित्रपूता वा अन्ये सोमा अथ वा एष वाक्पूतो यदुपांशुस्तस्माद्वाचस्पतये पवस्वेत्याह वाक्पूतो ३ह्येषो ऽंशुभिः पावयति प्राणा वा अंशवः प्राणैरेवैनं पावयति द्वाभ्यां ॰भ्यां पावयति द्वौ द्वौ ३हीमे प्राणा देवो देवानां पवित्रमसीति ॰त्स्वित्सोम सोमेन पुनाति स्वांकृतो ऽसीति प्राणमेव स्वमकृत ॰स्वार्ह्विति[4] मनसैव प्राणमाप्नोति स्वाहा

1) In W u H findet sich das तु; in Bb u B fehlt es. 2) So Ben u. M; die andern Mss पात्रीय 3) H, Bb u B schieben hier noch ein स्व ein 4) So corrigirt; die Mss. स्वार्ह्विति; cf aber oben 1,3,4 Uebrigens liest aber auch Kap.S. 42,1 स्वार्ह्विति

त्वा सुभव सूर्यायेति सूर्यदेवऽत्या हि सर्वे सोमा हूयन्ते ऽयो अंच वै देवानां प्रियास्तऽन्वस्तां एवावरुन्द्धे देवेभ्यस्त्वा मरीचिपेभ्या इति रश्मयो वै देवा मरीचिपाः परिधयो रश्मयो ऽसा आदित्य आहवनीयस्तानेव प्रीणात्यूर्ध्वस्तिष्ठञ्जुहोत्यूर्ध्वो हि तिष्ठन्वीर्यवत्तरो यं द्विष्यात्तस्य जिह्मस्तिष्ठञ्जुहुयात्प्राणानस्य छिनाति[1] विह्वारुको भवति यंद्यभिचरेदा तमितोस्तिष्ठेदग्निराहुतिमभितंरमाणस्तामंगनुगच्छति[2] यदि कामयेत वर्षेत्पर्जन्या इति परिमृज्योर्ध्वमुन्मृज्यादोषधीभ्यो वा एऽषो ऽमुतो वर्षत्योषधीरेवं नेदीयो वृष्ट्या अकर्यदि कामयेत वर्षेत्पर्जन्या इति परिमृज्यावाचीनमवमृज्याद्वैश्वानरेणैव वृष्टिमपि हन्ति[3] नापिधेयो यंदपिदध्यात्प्राणमस्यापिदध्यात्प्रमायुकः स्याद्यं द्विष्यात्तस्यापिदध्यात्प्राणमेवास्यापिदधाति यद्यभिचरेत् ॥ इदमहममुष्यामुष्यायणस्य प्राणमपिदधामि ॥ इत्यपिदध्यात्प्राणमेवास्यापिदधाति ॥ इदमहममुष्यामुष्यायणस्य प्राणं सादयामि ॥ इत्यभिचरन्त्सादयेत्प्राणं एवास्य सादयति प्रमायुको भवति प्राणाय त्वेत्यनभिचरन्त्सादयेत् ॥ ५ ॥

Vgl 1, 3, 4 — TS 6, 4 5 (grabah, upamçuh), Çat Br 4, 1, 1, 4, 1 2 21 flg, Kap S 41, 9 u 42 1 u 2

पवित्र॰ वितन्वन्ति प्राणापानयोर्विधृत्या उपयामगृहीतो गृह्यते ऽपानेन वै प्राणो धृतः प्राणस्य धृत्या अन्तरिक्ष॰ वा अन्तर्याऽमो ऽन्तरिक्षमिमाः प्रजा यदेतत्माच॰ सूदवत्सादयति प्रजास्वेव रसं दधाति[4] देवाश्च वा असुराश्चास्पर्धन्त ते देवा उपा॰शुमपश्य॰स्तमगृह्णत

1) So Ben u M, die andern Mss क्षिणाति 2) So Ben u M, B ॰भितक्षाण॰, H u Bb ॰भिचरमाण 3) So Ben u M die andern Mss ॰मेव इति 4) So Ben u M, die andern Mss ॰दधाति

तं पुरा स्तोत्रात्पुरा शस्त्राद्धोतुमुपोदतिष्ठꣳस्ते ऽसुरा अचिकयुर्जुह्वति वा इति तं वज्रमादायाभ्यपतꣳस्ते देवा अन्तर्याममपश्यꣳस्तमगृह्णत तेनासुरानेभ्यो लोकेभ्यो ऽन्तरदधत ततो देवा अभवन्परासुरास्तथो एवैवꣳ विद्वानन्तर्यामं गृह्णीते ऽन्तर्यामेणैव भ्रातृव्यमेभ्यो लोकेभ्यो ऽन्तर्धत्ते भवत्यात्मना परास्य भ्रातृव्यो भवति प्राणापानौ वा उपाꣳश्वन्तर्यामौ व्यान उपाꣳशुसवनो यदेवं ग्रावान्तरेणैते पात्रे सादयति प्राणापानयोर्विधृत्यै यौ वा एता इजते येनैतौ विधृता एष वाव स उपाꣳशुसवनो ग्रावा प्राणापानौ वा उपाꣳश्वन्तर्यामौ व्यान उपाꣳशुसवनो यदेते पात्रे एतं ग्रावाणमा तृतीयात्सवनान्न जहीतस्तस्मात्सुप्तस्य सर्वाण्यन्यानि श्रोत्राण्यपक्रामन्ति प्राणापानौ त्वेनं न जहीतो ऽथ यत्पुनरर्दयति[1] तस्मात्सुप्ता पुनः प्रबुध्यन्ते प्राणापानौ वा उपाꣳश्वन्तर्यामौ व्यान उपाꣳशुसवनो यदेते पात्रे एतं ग्रावाणमा तृतीयात्सवनान्न जहीतस्तस्मात्पक्षिणो वियत्य[2] पक्षानीरयन्तो नावपद्यन्ते ऽथ यत्पुनरर्दयति[3] तस्मात्पुनरभ्यायुवते प्राणापानौ वा उपाꣳश्वन्तर्यामौ व्यान उपाꣳशुसवनो यदेते पात्रे पुनः प्रयुज्येते तस्मादिमौ द्वा अधस्तात्प्राणौ घ्नन्ति वा एतत्सोमꣳ यदभिषुण्वन्त्यध्वर्युः प्रथमो ऽभिषुणोति व्यर्धुको भवति यच्च मूलं तदभिषुत्य एतद्वा अस्य विदेवतमं तथा हाव्यर्धुको ह भवति यो वै देवक्षेत्रꣳ विद्वाꣳसमर्पयत्यार्तिमार्छति पात्राणि वाव देवक्षेत्रꣳ यच्च वा अग्रे ऽध्वर्युः सोमं जुहोति तदेनं देवताः प्रत्यासत इह नो परमा ह रिष्यतीति[4] यत्ततो ऽन्यच्च जुहुयाद्यदस्य स्वं तदन्येभ्यः प्रयच्छेदस्वो ह

1) So Bcn u. M, die andern Mss ॰र्द्दयति 2) B वियत्स 3) So Ben u. M, die andern Mss ॰र्द्दयति 4) M (u. Bl, ohne Accent) हरिष्यतीति

भवत्येतद्वा अध्वर्योः स्वं यदाश्रावयति यदाश्राव्याहुत्वा प्रच्यवेत यदस्य स्वं तस्मात्प्रच्यवेतास्वो ह भवत्येतद्वा अध्वर्योः स्वं यद्वायव्यं यद्वायव्यमनालभ्याश्रावयेद्यदस्य स्वं तस्माच्छिद्येतास्वो ह भवति तद्य एवं विद्वानाश्राव्य हुत्वा वाहुत्वा वा प्रच्यवते बह्वस्य स्वं भवति न स्वाच्छिद्यते वायव्यमालभ्याश्रावयति स्ववानेव भवति ॥६॥

Vgl 1, 3, 5 — TS 6, 4 6 (antaryamah), Çat Br 4 1, 2, Kap S 41, 9, 42 2

ब्रह्मवादिनो वदन्ति किं तद्यज्ञे क्रियते यस्माद्धस्तादाना अन्ये पशवो मुखादाना अन्य इति यदुपांशुं हस्तेन गृह्यते तस्मान्मर्कटः पुरुषो हस्ती ते हस्तादाना मुखं वै वायव्यं यद्वायव्ये नेतरे ग्रहा गृह्यन्ते तस्मादितरे पशवो मुखादाना ब्रह्मवादिनो वदन्ति किं तद्यज्ञे क्रियते यस्मात्सद्यो जाताः पशवः प्रतितिष्ठन्ति संवत्सरे पुरुषा इत्युपांश्वन्तर्यामौ वा अन्वन्ये पशवः पुरुषस्त्वै यज्ञेन संमितः प्राणापानौ वा उपांश्वन्तर्यामौ यदेतौ ग्रहा असन्तौ हूयेते तस्मात्सद्यो जाताः पशवः प्रतितिष्ठन्ति संवत्सरो वा अग्निष्टोमो द्वादश मासाः संवत्सरो यदेत इतरे ग्रहाः साद्यन्ते तस्मात्पुरुषो जातः संवत्सरे प्रतितिष्ठति यन्ने सोमादाभ्यं नाम जागृवीत्येष वै सोमस्य सोमपीथः सोमं वा एतत्सोमपीथेन समर्धयति यो वै सोमस्य सोमपीथं वेद न सोमपीथाच्छिद्यते सोमो वा इमा दिशोऽभ्यकामयत प्रागपागधरागुदगित्याभिरेनं दिग्भिः समूहत्याभिः समर्धयति काममेनं गमयति कामं ह गच्छति कामुका एनं स्त्रियो भवन्ति यां कामयेत तां तर्हि मनसा ध्यायेत्सा हैनं कामयतेऽथ निसरति

---

1) H u Bb व्याहुत्या, desgl B ohne Accent 2) So Ben u M, die andern Mss स्वं 3) Bb दिशो 4) So Ben u M, die andern Mss सं

संरैति वा एतदाह समरिविदामिति संमनेन वित्स्यैति वा एतदाह चत्वारि वै पृश्नेः स्तना आसंस्तांस्त्रिभिर्देवेभ्यो ऽदुहत्कुशीभिरेको ऽनुनद्ध आसीत्तं वा इन्द्र एवापश्यत्तेनेन्द्रायैवादुहत्तद्वा अस्य कौशिकत्वं यदाह ॥ ब्राह्मण कौशिका इव ॥ इति चतुर्निग्राभमुपैति चत्वारि वै पयांसि यावदेव पयस्तदाप्नोति त्रिः संभरति तस्मादेतस्यां त्रयो भागाः प्रातर्मध्यंदिने सायं चतुर्निग्राभमुपैति त्रिः संभरति तत्सप्त सप्तपदा शक्वरी शाक्वराः पशवः पशूनेवावरुन्द्धे नव कृत्वो निग्राभमुपैति त्रिः संभरति तद्द्वादश द्वादश मासाः संवत्सरो द्वादशाग्निष्टोमे स्तोत्राण्येषा यज्ञस्य मात्रा स्वर्भानुर्वा आसुरः सूर्यं तमसाविध्यत्तस्य देवास्तमो ऽपाघ्नन्यत्प्रथमं तमो ऽपाघ्नन्सा विः कृष्णाभवद्यद्द्वितीयं सा लोहिनी यत्तृतीयं सा बलक्षी स स्वेन रूपेण निरमुच्यत यद्बलक्षः पवित्रं भवति ततः शुक्रो गृह्यते यजमानस्य वा एतत्पवित्रं यजमानमेवैतेन पुनात्यमोतं स्यादात्मन एवैनदकृत यदन्यमोतमपवित्रं तद्यजमानस्य ॥ ७ ॥

Vgl 1, 3 4 — TS 6, 4, 4—6, Kap S 42, 2 u 3

वाग्वा ऐन्द्रवायवः सा वै वागेकधावदद्यावदव्यावृत्तासीत्स इन्द्रो ऽब्रवीन्मह्यमत्रापि सोमं गृह्णीताह[6] व एतां वाचं व्यावर्तयिष्यामीति[7] स व वाचैव वाचं व्यावर्तयद्यदैन्द्रवायवो गृह्यते वाचो व्यावृत्त्यै वायवे प्रथमं गृह्णाति[8] वायव उत्तमं मध्यत इन्द्रायेन्द्रियेण वा इयं वाङ् मध्यतो विधृतेन्द्रियवतीं वाचं वदति य एवं

1) M दुह कु° 2) So die Mss 3) M भोगा 4) So Ben u M, in H बलक्ष°, in Bb der Accent zweifelhaft 5) Bb °मपवित्र H °मपवित्र 6) So Ben u M, die andern Mss गृह्णीयात्ताहं 7) Bb °यिष्यामीति 8) So Ben u M, H u Bb गृह्णीत, B गृह्णाति

वेद देवा वै सोममजिघांसंस्तं नाशक्नुवन्हन्तुं वायुर्ह्येषामन्तरासीत्प्राणस्तं देवा अभ्याशासुरुप न आवर्तस्वेति सो ऽब्रवीद्भागो मे ऽस्त्विति वृणीष्वेत्यब्रुवन्त्सो ऽब्रवीन्मद्देवत्यान्येव पात्राण्यासन्निति तस्मादपतुरीयं वायोः पात्रमेव वायव्यान्युच्यन्ते ततो वै देवाः सोममघ्नन्से हतो ऽपूयत्तस्माद्देवा उदवीभत्सन्त स वायुरब्रवीदहं व एतं सोमं स्वदयिष्यामि भागो मे ऽस्त्विति वृणीष्वेत्यब्रुवन्त्सो ऽब्रवीन्मदग्रा एव ग्रहा गृह्यान्ता[1] इति तं वायुमध्यतो व्यवात्तं तमस्वदयत्तस्माद्वाय्वग्रा ग्रहा गृह्यन्ते[2] तस्मादु शुक्तं[3] प्रवाते विषजन्ति देवा वै प्रातःसवनमुद्यमं नाशक्नुवंस्तृतीयसवने तर्हि वायुरासीत्तं देवाः प्रातःसवनमभिपर्यौहंस्तेन प्रातःसवनमुदयच्छन्त यदैन्द्रवायवः प्रातःसवने गृह्यते प्राणो वै वायुः प्राणेन वा एतन्मुखतो यज्ञमुद्यच्छन्ते देवा वै वृत्रमजिघांसंस्तं मित्रो ऽब्रवीन्मि३त्रो ऽहमस्मि नाहं हनिष्यामीति ते ऽब्रुवञ्ज३ह्येवेति सो ऽब्रवीद्भागो मे ऽस्त्विति वृणीष्वेत्यब्रुवन्त्सो ऽब्रवीत्पयसैव मे सोमं श्रीणानिति[4] तस्मात्पशवो ऽपाक्रामन्मित्रः सन्नदुहा इति पशूनां हि पयो यन्मैत्रावरुणं पयसा श्रीणाति पशुभिरेवैनं सम्यञ्चं दधाति यन्मैत्रावरुणं पयसा श्रीणाति द्विदेवत्यत्वाय यच्छीतं तेन मैत्रं यत्तप्तं तेन वारुणं ब्रह्म वै मित्रः क्षत्रं वरुणो ब्रह्मणि च वा एतत्क्षत्रे च पयो दधाति तस्माद्ब्रह्म च क्षत्रं च पयस्वितमे पञ्च वै ब्राह्मणस्य देवता अग्निः सोमः सविता बृहस्पतिः सरस्वती तस्माद्ब्राह्मणमन्ये मनु३ष्या उपधावन्त्येतस्य[5] हि भूयिष्ठा देवतास्तासां तिस्रो ऽवान्तरं श्रोत्रिय-

1) So schreibe ich mit Bb; die andern Mss गृह्यंता; cf TS 6,4,7,1 2) H u Bb गृह्यंते 3) Bb शुक्र 4) Ben °श्राणीति 5) So Bb, die andern Mss. उपाध°

स्योग्निर्बृहस्पतिः सरस्वती तस्माऽग्नौ चियमग्नौ चिया[1] उपधावन्त्येतस्य ह्युवान्तरं भूयिष्ठा देवतास्ता मैत्रावरुणं प्रति न्यागछन्ति यन्मैत्रावरुणं पयसा श्रीणाति तास्वेव पयो दधाति नाना वै पुरा मित्रावरुणाभ्याꣳ सोमा अगृह्णꣳस्ताः प्रजा अन्यान्यस्याः[2] परिहायमाददत ततो मित्रावरुणाभ्याꣳ सह सोममगृह्णꣳस्ततो वा अकल्पत यन्मैत्रावरुणं पयसा श्रीणाति मित्रेण वा एतद्वरुणं कल्पयति वरुणेन मित्रं मित्रꣳ वै वृत्रं जघ्निवाꣳसꣳ वरुणोऽगृह्णात्स देवेभ्यो नाथत ते ऽब्रुवन्वरुणे नाथस्वेति स वरुणे ऽनाथत सो ऽब्रवीद्भागो मे ऽस्त्विति वृणीष्वेत्यब्रुवन्त्सो ऽब्रवीत्सहैव नौ पयसा सोमꣳ श्रीणानिति यन्मैत्रावरुणं पयसा श्रीणाति यजमानस्य निर्वरुणत्वाय यद्येनं भ्रातृव्यो ऽतीव स्यादङ्गुल्याङ्गुष्ठमवगृह्णीयाद्यद्यन्वङ्गुष्ठेनाङ्गुलिम् ॥

यो नो मित्रावरुणा अभिदासात्सपत्नो भ्रातृव्य उत्सिमीते बृहस्पते ।

इदमहं तमधरं पादयामि यथाहमुत्तमश्चेतयानि ॥

इत्युत्तमो ह चेतयति ॥ ८ ॥

Vgl 1, 3, 6 u. 7. — TS 6, 4, 7 (āindravāyavaḥ) u 8 (māitrāvaruṇaḥ); Çat. Br. 4, 1, 3 u 4; Kap. S 42, 3 u. 4.

देवा वै सत्त्रमासत कुरुक्षेत्रे ऽग्निसखो वायुरिन्द्रस्ते ऽब्रुवन्यतमो नः प्रथमं याभवत्स नः सहेति तेषाꣳ वै मत्त आभीत्ति न्युका-

1) So M, in Ben °ग्नौचिया, in H u. Bb °मग्नौचिया betont  2) So H u. Bb; in Ben मित्रावरु°, M मित्रावरु°  3) M कल्पास्माह्या  4) So H u. Bb; in Ben u. M मित्रावरु°  5) M (u. Bl), °योवासवीत्; Bb °योवासुवत्  6) M (u. Bl) वायुवत्  7) Das वै fehlt in M (u. Bl).

मयत तं न समसृजत तदस्य प्रासहादित्सन्त स इत एवं तिस्रो ऽजनयतेतौ धनुस्तत्तिसृणां च धन्वनश्च जन्म स प्रतिधायापाक्रामत्तं नाभ्यधृष्णुवंस्ते धन्वार्ति[1] प्रतिष्कभ्यातिष्ठत्से[2] इन्द्रो वम्रीरब्रवीदेतां ज्यामपत्स्यतेति[3] ता अब्रुवन्नेभिमृताया वा अस्यां न शक्ष्यामो जीवितुं भागो नो ऽस्त्विति सो ऽब्रवीदूर्जमेवास्या उपजीवाथेति तस्मादेताः शुष्कादार्द्रमुद्हिहन्ति रस उ ह्यस्या उपजीवन्ति ता वै ज्यामपादंस्तस्य धन्वार्तिरुद्वय[4] शिरो ऽच्छिनत्स सम्राडभवद्यत्तरं चेधा व्यगृह्णतामिः[5] पूर्वार्धमिन्द्रो मध्यं वायुर्जघनार्धं[6] तस्मादाग्नेयं प्रातःसवनमैन्द्रं माध्यंदिनं सवनं वैश्वदेवं तृतीयसवनं वायुर्हि विश्वे देवाः प्राणापानौ वा उपांश्वन्तर्यामौ व्यान उपांशुसवनो वागिन्द्रवायवौ दक्षक्रतू मैत्रावरुण आश्विनः श्रोत्रं चक्षुषी शुक्रामन्थिनावात्माग्रायणो ऽङ्गान्युक्थ्या आयुर्ध्रुवः स्तना ऋतुपात्रे मूर्धा द्रोणकलशः कुक्षी कलशौ हनू अधिषवणे जिह्वाधिषवणं ग्रावाणो दन्ता अक्षाः परिधयो नासिकोत्तरवेदिः शिखा यूपः शिरो हविर्धानं पृष्ठमाग्नीध्रमुदरं सदो यदन्तरुदरे तद्धिष्ण्याः पाणी आग्नीध्रश्च मार्जालीयश्च[7] पार्ष्णी गार्हपत्यः प्रतिष्ठा वेदिरेष वै प्रजापतिः पाचीयः स ह त्वा एनं वेद य एवं वेद ॥ ९ ॥

Vgl (TA 5 1)

1) M (n Bl ohne Accent) धन्वार्ति 2) Ben प्रतिस्कभ्या° 3) H ज्यामपत्स्यतेति
4) So Ben, in M (n Bl ohne Accent) धन्वार्तिरुद्वय die andern Mss धन्वार्तिरुद्वय 5) So Ben, desgl M ohne Accent (n Bl), B व्यगृह्णीता°, H व्यगृह्णिता°, Bb व्यगृह्णाता° 6) M (n Bl) °नार्धे 7) So Ben u M, die andern Mss मार्जालीयश्च
8) Das इति fehlt in den Mss

॥ इति[8] खिलकाण्डे पञ्चमः प्रपाठकः ॥

नवैते प्रातर्ग्रहा गृह्यन्त इमे वा एते गृह्यन्ते नव प्राणा आश्विनो दशमो गृह्यते व्यानो वा एष गृह्यते नाभिरेव दशमो गृह्यते तृतीयो हूयते तृतीयो ह्ययं प्राणः प्राणानाꣳ संतत्यै सर्वे वा एते ग्रहाः स्तोत्रवन्तः शस्त्रवन्तो निदानवन्तो निदानवान्भवति य एवं वेद होता वा अद्य प्रातरुपाꣳशुमयजत्तेनैत उक्थवन्तोऽथ यं होता तूष्णीꣳशꣳसꣳ शꣳसति तेनैवैत[1] उक्थवन्तो नवैते प्रातर्ग्रहा गृह्यन्ते नवभिर्बहिष्पवमाने स्तुवते ते रेते[2] सामन्वन्तो हिंकारेणाश्विनः सामन्वानैन्द्रवायवेनैन्द्रवायवो मैत्रावरुणेन मैत्रावरुण ऐन्द्रेण शुक्रामन्थिनौ वैश्वदेवेनाग्रायण उक्थायोक्थ्यो गृह्यत उक्थाय ध्रुवः संतत्या ऐन्द्राग्नः संतत्यै सरस्वतीया अध्वर्युर्जुहोति होता वषट्करोति प्राणान्वा एतत्प्रधत्तो येन मन्त्रेणाध्वर्युः प्रयच्छति तेन होता प्रतिगृह्णाति प्राणानां गोपीथाय प्रजापतिर्वै स्वयꣳ होतासीत्सोऽताम्यत्तं देवा द्विदेवत्यैरभ्यधावन्प्राणा वै द्विदेवत्या यदध्वर्युर्द्विदेवत्यान्हुत्वा क्षिप्रꣳ होतारमभ्याद्रवति प्राणैर्वा एतद्धोतारमभिधिनोति वषट्कारे वषट्कारे वै होता प्राणस्यान्तं गच्छति प्राणा वै द्विदेवत्या यदध्वर्युर्द्विदेवत्यान्हुत्वा क्षिप्रꣳ होतारमभ्याद्रवति प्राणैर्वा एतद्धोतारमभिधिनोति प्राणा वै द्विदेवत्याः पशव इडा यद्द्विदेवत्यानभक्षयित्वेडामुपह्वयेत पशुभिः प्राणानन्तरियादथ यद्द्विदेवत्यान्भक्षयित्वेडामुपह्वयते प्राणान्वा एतदात्मन्धित्वाथ पशूनुपह्वयत इन्द्रियं वै सोमः पशव इन्द्रियꣳ यत्सोमं भक्षयतीन्द्रियमेवात्मन्धत्ते सर्वत आश्विने परिहारं भक्षयति तस्मात्सर्वा दिशः शृणोति ॥ १ ॥

Vgl. 1, 3, 8 — TS 6, 4, 9 (açvinah), Kāṭh 27, 5; Kap S 42, 5

---

1) Bcn °नैवैत 2) Bb ते रेत 3) H u Bb °पिमंहोतार° 4) M पशुंमुप°

यद्वै पात्रं रिक्तमन्वनुमुक्तं तदनु रक्षांसि यज्ञमन्ववयन्ति यदैन्द्रवायवे पुरोडाशमवदधाति मैत्रावरुणे पयस्यामाश्विने धाना अरिक्तत्वाय वि वा एतद्यज्ञश्छिद्यते यत्सवनानि संतिष्ठन्ते यदेतानि पात्राण्या तृतीयात्सवनात्परिशेरे यज्ञस्य संतत्या अविच्छेदाय वायव्यायां शस्यमानायां पात्राणि विमुञ्चति प्राणो वै वायुः प्राणेन यज्ञः संततः प्राणेनैव यज्ञं संतनोति ॥ एकया च दशभिश्च स्वभूते[1] द्वाभ्यामिष्टये विंशत्या च तिसृभिश्च वहसे त्रिंशता च नियुद्भिर्वायविह ता वि-मुञ्च ॥ इत्याह विमुक्त्या एवावगतं[2] वा अध्वर्युपात्रं निरूढं प्रतिप्रस्थानं यदि कामयेत यो बहिस्तं ग्रामे कुर्यां यो[3] ग्रामे तं बहिरिति ॥ इदमहममुमामुष्यायणममुष्याः पुत्रममुष्या[4] विशो निरूहामि ॥ इत्यध्वर्युपात्रं निरूह्य ॥ इदमहममुमामुष्यायणममुष्याः पुत्रममुष्यां विशि सादयामि ॥ इति प्रतिप्रस्थानं सादयेद्यो बहिस्तं ग्रामे करोति यो ग्रामे तं बहिरध्वर्युपात्रं वै यजमानस्य पात्रं प्रतिप्रस्थानं भ्रातृव्यस्य यदि कामयेत समावद्वीयमेनं[5] भ्रातृव्येण कुर्यामिति प्रबाहुग्गृह्णीयातां प्रबाहुक् सादयेतां प्रबाहुग्जुहुयातां समावद्वीयमेवैनं भ्रातृव्येण करोत्यध्वर्युपात्रं वै पात्रं पापीयः प्रतिप्रस्थानं यदि कामयेत पापवसीयसं स्यादिति पूर्वो गृह्णीयात्पूर्वैः[6] सादयेत्पूर्वो जुहुयादेतेन वै विपूजनः सौराकिः पापवसीयसं चकार तत्पापवसीयसमेवैतेन करोति यज्ञस्य वै सृष्टस्य शिरोऽच्छिद्यत तस्मै देवाः प्रायश्चित्तिमैच्छंस्ता वा एतौ तर्हि देवानां भिषजा आस्ताम-

---

1) Bb स्वभूते 2) So Ben u M, in H u Bb एवावहृतं; B एवावक् तं 3) So Ben, die andern Mss कुर्यां यो 4) So corrigirt, die Mss °मुष्यां 5) H u Bb समावद्धीयमे° 6) In Bb गृह्णीयात् ohne Accent

श्विना असोमपौ तौ उपाधावन्यथा भिषजमुपधावन्त्येवमिदं यज्ञस्य शिरः प्रतिधत्तमिति तौ अब्रूतां भागो नौ अस्त्विति वृणाथामित्यब्रुवंस्तौ[1] अब्रूतां ग्रहं नौ गृह्णन्तु सोमपीथमश्ववावहा[2] इति तद्वा अश्विनौ प्रत्यधत्तां तस्मादाश्विनीभिरभिष्टुवन्त्यश्विनौ हि प्रत्यधत्तां तौ वै बहिष्पवमानेनैव पावयित्वा ताभ्यां पूताभ्यां यज्ञियाभ्यां भूताभ्यां ग्रहमगृह्णंस्तस्माद्बहिष्पवमाने स्तुत आश्विनो गृह्यते तस्माद्ब्राह्मणेन बहिष्पवमानमभिसृप्यं पवित्रं हि तत्तस्माद्धिष्यात्तं परिबाधेत तद्वै भेषजं त्रेधा विन्यदधुरग्नौ तृतीयं ब्राह्मणे तृतीयमप्सु तृतीयं तद्य एवं विद्वानग्रेऽन्तो ब्राह्मणाय प्रोच्याप्सु भेषजं करोति समर्धुकं ह भवति यावद्धि भेषजं तत्क्रियते वास्तुहानि वा एतत्पात्राणि भवन्ति यद्ग्रहान्गृहीत्वा बहिष्पवमानं सर्पन्ति वैष्णव्यर्चा पुनरेत्य संमृशति विष्णुर्वै यज्ञो विष्णुनैवैनानि यज्ञेन स्वर्गं लोकं समारोहयति[4] ॥ २ ॥

Vgl TS 6, 4, 9 (âçvinah), Kaṭh 27, 5 u 6, Kap S 42, 4 u 5

प्रजापतेर्वा एते चक्षुषी यच्छुक्रामन्थिनावसा आदित्यः शुक्रश्चन्द्रमा मन्थी तस्य वै प्रजापतेः सव्यं चक्षुरश्वयत्ततो ये स्तोका अवापद्यन्त तैरिदं वर्षत्येकविंशतिर्वै ते ऽवपेदुस्तान्वायुरमुतो विसृजति प्रजानां कॢप्त्यै तस्य या कनीनिका परापतत्स यवो ऽभवद्यन्मन्थिनं सक्तुभिः श्रीणाति चक्षुरेवास्य संभावयति मिथुनं वै सोमश्च सक्तवश्च यन्मन्थिनं सक्तुभिः श्रीणाति मिथुनत्वायैतं वा एतत्पात्रं यन्मन्थिपात्रं यं द्विष्यादृत्विजां तस्मै हरेदार्तिमार्छति प-

1) H u B वृणाया° 2) Ben °वामहा 3) H u Bb °ख्यं° 4) Bb °रोहति 5) Ben संपेद्धि°

षण्डामर्कौ वा असुराणां पुरोहिता आस्तां तान्देवा[1] नाशक्नुवन्हन्तुं ब्राह्मणवन्तो ह्यासंस्तौ देवा उपामन्त्रयन्ता वर्तेथामिति ता अब्रूतां[2] भागो ना अस्त्विति वृणाथामित्यब्रुवंस्ता एतौ शुक्रामन्थिना अवृणातां ते देवा अमन्यन्त यदिमा असुर्यौ[3] सोमौ होष्यामस्तदन्वसुरा आभविष्यन्ति यन्न होष्यामस्तदन्वाभविष्यन्तीति ता अपनुद्याथेन्द्रायाजुहवुस्तस्मादेता अन्यदेवत्यौ गृह्येते[4] अथेन्द्राय हूयेते[5] अपनुत्तौ षण्डामर्कौ सह तेन यं द्विष्म इति षण्डामर्कयोरेवैनं सहापनोदेनापनुदते ॥ आयुः पाहि प्रजां पाह्यमुष्य वीरतां पाहि ॥ इति सादयेद्यो ऽस्य प्रियः स्यात्तस्य शुक्रं वै प्रति राष्ट्रं मन्थिनं निरुद्धं मध्यता इति ह्येतद्राष्ट्रमाहुर्यन्निरुद्धं भवति यदि कामयेत यो बहिस्तं ग्रामे कुर्या[6] यो ग्रामे तं बहिरिति ॥ इदमहममुमामुष्यायणममुष्याः पुत्रममुष्या[7] विशो निर्हामि ॥ इति शुक्रपात्रं निरुह्य ॥ इदमहममुमामुष्यायणममुष्याः पुत्रममुष्या विशि सादयामि ॥ इति मन्थिपात्रं सादयेद्यो बहिस्तं ग्रामे करोति यो ग्रामे तं बहिरेतद्वा एतत्पात्रं यन्मन्थिपात्रं यच्छुक्रपात्रं पुनः प्रयुज्यते तस्मादिमे समावद्वीर्ये तस्मादाभ्यां समावत्पश्यत्यसौ वा आदित्यः शुक्रश्चन्द्रमा मन्थी यदपिधाय प्राञ्चा हरतस्तस्मादेतौ प्राञ्चौ यन्तौ न पश्यन्त्यथ यदनपिधाय प्रत्यञ्चौ तिष्ठन्तौ जुहुतस्तस्मात्प्रत्यञ्चौ यन्तौ पश्यन्ति[8] यदपिधाय प्राञ्चा हरतस्तस्मात्पराङ् प्राणो ऽथ यदनपिधाय प्रत्यञ्चौ तिष्ठन्तौ जुहुतस्तस्मात्पुनरपानो यदपिधाय प्राञ्चा हरतस्तस्मात्पराञ्चो

1) So corrigirt; die Mss तौ देवा 2) H u Bb अब्रूता 3) So Ben u. M; in B असूर्यौ; H u. Bb असुर्यौ 4) So Ben, in H u Bb गृह्येते, desgl. M (n. Bl) u. B, ohne Accent. 5) So M (n Bl), die andern Mss हूयते, H हूतये 6) So Ben; desgl M (n. Bl), ohne Accent, die andern Mss कुर्याद्यो, cf oben 4, 6, 2. 7) So corrigirt; die Mss ॰मुष्या॰; cf oben 4, 6, 2. 8) H u Bb पश्यति

गर्भो धीयन्ते ऽथ यदनपिधाय प्रत्यञ्चौ तिष्ठन्तौ जुहुतस्तस्मात्प्रत्यञ्चः प्रजायन्ते चक्षुषी वै शुक्रामन्थिनौ नासिकोत्तरवेदिर्यदङ्गुष्ठाभ्यामाक्रमेते चक्षुषी वा एतत्प्रधत्तो ऽथ यदुपरिष्टादाक्रमेते तस्मादिमे उपरिष्टाच्चक्षुषी तुष्टो ऽसि जनधाया देवास्त्वा शुक्रपाः प्रणयन्त्विति या अर्वाचीः प्रजास्तासामेषं योनिस्ता एतमनुप्रजायन्ते तुष्टो ऽसि जनधाया देवास्त्वा मन्थिपाः प्रणयन्त्विति या आद्याः प्रजास्तासामेष योनिस्ता एतमनुप्रजायन्त उभयीरेवं प्रजाः प्रजनयत्यर्वाचीश्चाद्याश्च शुक्रमन्वारभन्ते तेजो वै शुक्रो ब्रह्मवर्चसं तेज एव ब्रह्मवर्चसमन्वारभन्ता इन्द्रेण मन्युना युजेति शुक्रेण परियन्ति मन्युना वै युजेन्द्रो ऽसुरानवाबाधत मन्युना वा एतद्युजा यजमानो भ्रातृव्यमवबाधते संजग्मानौ दिवा पृथिव्येत्यरत्नी संधत्त इमानि वा एतत्संधत्तो यत्प्राचे संदध्यातां नेदमन्तरा स्यादथ यदरत्नी संधत्तस्तस्मादिदमन्तरा चक्षुषोर्विधृत्यै पुमांसं गर्भमाधत्तं गवीउन्योरिति तदनु स्त्रीउष्यो यजमानस्य गावो भवन्ति वीरं पत्नी जनयति शुक्रस्याधिष्ठानमसि मन्थिनो ऽधिष्ठानमसीति शकलौ प्रास्यतः समिद्धा एवैतयोरथो आहुतीनां प्रतिष्ठित्यै निरस्तः षण्डो निरस्तो मर्कः सह तेन यं द्विष्म इति शकलौ निरस्यत एतावांल्लोको यावदुद्गत यावानेव लोकस्तस्माद्यजमानो भ्रातृव्यं निर्भजति श्रीणन्त्यन्यान्सोमान्नान्यांस्तत्सोमानां मिथुनं याञ्छ्रीणन्ति ताननुवर्षति यान्न

1) H u Bb ॰मेवं 2) So Ben u M die andern Mss नैदम॰ 3) So Ben u M, die andern Mss स्त्रीश्यो 4) Bb शण्डो, wir hatten wohl auch oben 1, 3 12 mit M 1 षण्डो schreiben sollen, übrigens aber schreibt Kath in dem hier entsprechenden Cap 31, 8 शण्डामर्कौ 5) Bb सकलौ 6) So Ben u M, die andern Mss ॰दद्यत

श्रीणन्ति ताननुवीप्रति[1] दारुमयान्यन्यानि पात्राणि मृन्मयान्यन्यानि तत्पात्राणां मिथुनं यो वै सोमस्य च पात्राणां च मिथुनं वेद मिथुना एनं पशवा उपतिष्ठन्ते ॥ ३ ॥

Vgl. 1, 3, 10 11 u 12 — TS 6, 4, 10 (çukrâmanthinâu), Kâth. 27, 7 u. 8; Kap. S. 43, 1.

प्रजापतिर्वा आग्रायणो[2] ये देवा दिव्येकादश स्थेत्येतावन्तो वै देवा[3] यावन्त एव देवास्तेभ्यो गृह्यत आग्रायणं[4] वै गृहीत्वा देवाः स्वर्गं लोकमायन्नपासुरा अभ्रंशन्त ततो देवा अभवन्पराऽसुरास्तद्य एवं विद्वानाग्रायणं[5] गृह्णीते भवत्यात्मना परास्य भ्रातृव्यो भवति य आनुजावरः स्यात्स आग्रायणाग्रान्ग्रहान्गृह्णीताग्रं[6] ह्याग्रायणो[7] यद्यभिचरेत् ॥

विदद्यदी सरमा रुग्णमद्रेर्महि पाथः पूर्व्यं सध्र्यक्कः ।
अग्रं नयत्सुपद्यक्षराणामच्छा रवं प्रथमा जानती गात् ॥

इति पुरोरुचं कुर्याद्गच्छति हैवाग्रं वाग्वै सरमा वाचमेवैषा वृङ्क्ते त्सरा[8] वा एषा यज्ञस्य तस्माद्यत्किंच प्राचीनमाग्रायणात्तदुपांशु[9] चरन्त्यथ वा एतदाग्रायणं[10] प्रति वाचं विसृजन्ते यज्ञमेवाप्त्वा वाचं विसृजन्ते वाग्वै देवेभ्योऽपाक्रामत्ते देवास्तूष्णीं यज्ञमतन्वत सा वागमन्यतान्तर्वै मा यज्ञाद्यन्तीति साग्रायणं[11] प्रति न्यद्रवत्तस्मादाग्रायणं प्रति वाचं विसृजन्ते हिंकृत्य वाचं विसृजन्ते प्राणो वै हिंकारो वाक् प्राणस्तद्वाच एवैषा युक्तिस्त्रिर्हिंकरोति त्रेधा हीयं वाग्वदति शनैरुच्चैरथ सूच्चैर्यावत्येव[12] वाक् सास्य युज्यते श्रेयो वै

1) So M; desgl B, ohne Accent, Ben विप्रति; Bb वीप्रति; H वीप्रति oder वीप्रति 2) Bb ग्रायणो 3) In H u Bb zweimal यावन्त एव देवा 4) Bb ग्रायणं 5) Bb °ग्रयणं 6) Bb ग्रायण° 7) Bb °ग्रयणो 8) M सरा 9) Bb °ग्रयणा° 10) Bb ग्रयणं 11) Ben प्राया° 12) M सुचै

प्राजापत्या ऋत्विज उद्गाता प्रस्तोता प्रतिहर्ता ते वा अस्यैतर्हि वृत्ता[1] अयुक्ता यद्धिंकरोति[2] तेनैवास्य ते वृत्ता[3] युक्ता भवन्ति वाक् च मनश्चावदेतामहं श्रेयानस्म्यहं श्रेयानसीति तौ प्रजापतिं प्रश्नमैतां सा वागब्रवीन्नैव मया किं चनानभ्युदितं[4] क्रियता इत्यथ मनो ऽब्रवीन्नैव मया किं चनानभिगतं क्रियता[5] इति स मनसे ऽन्वब्रवीत्तां वागब्रवीदहं हव्यवाडेवाहं तुभ्यमसानीति तस्मादेषा प्रजापतये[6] ऽहव्यवाट् तस्माद्यत्किंचोपांशु क्रियते तदाहुः कृतमेतत्क्रियता इति प्रजापतये हि क्रियते द्वाभ्यां धाराभ्यां[7] प्रातःसवने गृह्णाति तिसृभ्यो माध्यंदिने सवने चतसृभ्यस्तृतीयसवने तन्नव नव प्राणा आत्माग्रयणः प्राणानेवात्मन्धत्ते वि वा एतद्यज्ञश्छिद्यते यत्सवनानि संतिष्ठन्ते ये देवा दिव्येकादश स्थ पृथिव्यामध्येकादश स्थाप्सुक्षितो महिनैकादश स्थेति देवताभिर्वै[8] यज्ञः संततो देवताभिरेव यज्ञं संतनोति प्रजापतिर्वा आग्रयणो[9] यत्सर्वेषु सवनेष्वभिप्रस्कन्दयति प्रजापतिर्वा एताः प्रजा अभिजिघ्रति प्रजापतिर्वा आग्रायणो यत्सर्वेषु सवनेषु गृह्णात्यात्मन्नेव यज्ञं संतनोति प्रजापतिर्वा आग्रायणो यदेषो ऽतिरिच्यते तस्मात्पुरुषः पशूनां दविष्ठमेत्याग्रायणो[10] वै गायत्र्या वत्सस्तं वा एतदा तृतीयात्सवनादभिप्रतिधावति[11] गायत्र्या वा एते लोके सर्वे सोमा गृह्यन्ते तां वा एतत्सर्वाणि सवनान्यभिप्रतिधावन्त्यथ यत्स्थाल्यां गृहीतो विज्ञातस्थाल्या होष्यन्ती३ दारुमयेणा३[12] इति तस्माद्वि-

1) M °वृता 2) M यद्धि हिंकरोति 3) M वृता 4) H u Bb चनान्यन्युदित 5) Bb क्रियाता, M क्रीयता 6) Von hier bis zum folgenden प्रजापतये in B fehlend 7) Dies Wort fehlt in B 8) Das वै fehlt in Bb 9) Bb आग्रयणो 10) Bb °ग्रयणो 11) M धावंति 12) Die Mss schwanken, Ben होष्यती दारुमयेणा indem zugleich eine ३ über der Linie die Plutirung der letzten Silbe eines jeden der Worter andeutet, in M हो३ष्यतो३ दारुमयेणा, in H u Bb होष्यती दारुमयेणेति, desgl B, ohne Accent

ज्ञातेन गर्भेण भ्रूणहाथ यत्स्थालीं रिञ्चन्ति[1] न दारुमयं तस्मात्पुमान्दायादः स्त्र्यदायादाथ यत्स्थालीं परास्यन्ति न दारुमयं तस्मात्स्त्रियं जातां परास्यन्ति[2] न पुमांसमथ स्त्रिय एवातिरिच्यन्ते ॥ ४ ॥

Vgl 1, 3, 12 — TBr. 6, 4, 11 (âgrâyanah), Kâth 27, 9

इन्द्रो वै वृत्राय वज्रमुदयच्छत्सं वज्रमुद्यतं दृष्ट्वाबिभेत्सो ऽब्रवीदस्ति वा इदं त्वय्यस्मिन्नन्तर्वी३र्यं तत्ते प्रदास्यामि[3] मा मा वधीरिति तद्वा अस्मै प्रायच्छद्वीर्यं वा अस्मै तत्प्रायच्छत्पशूनुक्थ्यमेव यदुक्थ्यो गृह्यते यज्ञस्य च पशूनां चावरुद्ध्या एतावान्वै यज्ञो यावानुक्थ्यो ऽन्तःश्लेषणमेवान्ये ग्रहाः सर्वो वा एष[4] यज्ञस्य यदु३क्थ्यो यथा वा इदं सर्वं संनह्य[5] प्रस्नात्येवं वा एतदुक्थ्यमालभ्य प्रस्नाति स एनमा यज्ञस्योदृचः संपारयत्यङ्गानि वा उक्थ्यो यज्ञस्य संतत्यै गृह्यते तस्मै त्वा विष्णवे त्वेति विष्णुर्वै यज्ञो विष्णुना यज्ञः संततो विष्णुनैव यज्ञेन यज्ञं संतनोत्येतेन वा इदमुक्थानि[6] संततानि तस्मात्पुरुषः स्नावभिरनुसंततः सद आलभ्यावनयति यज्ञं वा एतत्संतत्य संप्राप्यावनयति चक्षुर्वै शुक्रश्चक्षुरु३क्थ्यश्चक्षुर्वा एतत्पुरस्ताद्ध्रियते ऽथो यथेदं पुरस्तात्पश्चात्पश्यन्नन्वेत्येवं तदथ यदेकः सन्त्रेधा क्रियते तस्मादेकः श्रेष्ठः पूर्वार्धे ऽवस्यति यदेतौ ग्रहौ भूयिष्ठाः सोमा अनु हूयन्ते[7] पापवसीयसस्य व्यावृत्त्यै यदेतत्प्राचं भूयिष्ठाः सोमा अन्वायन्ति तस्मादेकं श्रेष्ठं यन्तं बहवः पश्चादनुयन्ति[8] पात्राणि वा अध्वर्युं पुरो विदुह उक्थामदानि[9] पश्चैन्द्र्या[10] सदा उपचरत्याग्नेय्याग्नीध्रं वैष्ण-

1) So Ben u M, in H u Bb रिचंति, desgl B, ohne Accent 2) So M, H u Bb, in Ben परास्यन्ति 3) Ben प्रजास्यामि Kâth 27, 10 प्रदास्यामि 4) Ben एषा 5) H संनह्य 6) So M, in Ben °मुकथ्यानि, Bb °मुकथ्यानि, desgl B, ohne Accent, H °मुथ्यानि 7) H u Bb हूयंते 8) So Ben, die andern Mss. (auch M) यच्छति 9) So M; in Ben उकथ्यामदानि, Bb उकथ्यमदानि, H u Bb उथ्यमदानि 10) So Ben u M, in H पश्चैन्द्र्या; desgl B, ohne Accent, Bb पश्चैन्द्र्या

व्यां हविर्धान यथादेवतमेवैनान्युपचरति तथा हैनं न विंदुह्रे ऽन्तराहवनीयं च हविर्धानं चाध्वर्योर्लोको ऽन्तरा हविर्धानं च सदश्च यजमानस्य सदः सदस्यानां यदि कामयेताध्वर्युं यश ऋच्छेदित्यन्तराहवनीयं च हविर्धानं चावनयेत्सोमो वै यश एषो ऽध्वर्योर्लोको ऽध्वर्युमेव यशसार्पयति यदि कामयेत यजमानं यश ऋच्छेदित्यन्तरा हविर्धानं च सदश्चावनयेत्सोमो वै यश एषं यजमानस्य लोको यजमानमेव यशसार्पयति यदि कामयेत सदस्यान्यश ऋच्छेदित्यन्तः सदस्यावनयेत्सोमो वै यश एष सदस्यानां लोकः सदस्यानेव यशसार्पयति सद आलभ्यावनयत्यैन्द्रं वै सद ऐन्द्राण्युक्थान्युक्थानां संतत्या उक्थानामनपछेदाय ॥ उपयामगृहीतो ऽसि मित्रावरुणाभ्यां[6] त्वा ॥ इति गृह्णाति प्रातःसवने मैत्रावरुणाय ॥ इन्द्राय त्वा ॥ इति ब्राह्मणाच्छंसिने ॥ इन्द्राग्निभ्यां त्वा ॥ इत्यच्छावाकाय ॥ उपयामगृहीतो ऽसीन्द्राय त्वेन्द्राय त्वा ॥ इति गृह्णाति सर्वेभ्यो माध्यंदिने सवने ॥ उपयामगृहीतो ऽसीन्द्रावरुणाभ्यां त्वा ॥ इति गृह्णाति तृतीयसवने मैत्रावरुणाय ॥ इन्द्राबृहस्पतिभ्यां त्वा ॥ इति ब्राह्मणाच्छंसिने ॥ इन्द्राविष्णुभ्यां त्वा इत्यच्छावाकायैवमस्य यथोक्थं[7] यथादेवतं गृहीता भवन्ति ॥ ५ ॥

Vgl 1, 3 14 — TS 6, 5, 1 (ukthyagrahah), Kāth 27, 10

आयुर्वै ध्रुवस्तमुत्तमं गृह्णात्युत्तमं ह्यायुः स्थाल्या गृह्णात्यायुषो धृत्यै पूर्णं गृह्णाति सर्वमायुरेतिति प्राणो वै गायत्र्यायुर्ध्रुवो यदेषा तृतीया-

1) Von hier ab in M eine Lücke (ein Blatt fehlt) 2) H सोमे 3) So corrigirt; die Mss सदस्यामेवं 4) So Ben, die andern Mss °कथ्यान्युकथ्याना° 5) So Ben, die andern Mss उक्थ्याना° 6) So H u Bb, in Ben मित्रावरुणाभ्या 7) Ben यथोक्तं°

त्सवनात्परिशिंषेत्तस्माद्यावदायुस्तावान्प्राण आयुर्वै ध्रुवो यदग्निष्टोमं मास्त्वा आयुरेवाप्नुयान्निः सर्पेत्यायुर्वै ध्रुवो यत्केवलं जुहुयादायुः प्रजानां प्रदध्यात्परिधानीयाया शस्यमानायामवनयति स ह्यन्तो[1] होतृचमसे ऽवनयति वैश्वदेवो वै होता वैश्वदेवीरिमाः[2] प्रजाः सर्वासु वा[3] एतत्प्रजास्वायुर्दधाति जनानामित्याहुः सर्वासां वा एतत्प्रजानामायुः सर्वाभ्यः[4] प्रजाभ्यो गृह्यत उभयतोवैश्वानरो गृह्यत उभयतोवैश्वानरो ह्ययं प्राणो ऽयं वाव वैश्वानरो यो ऽयमवाङ् प्राणो यदेष केवला उत्तरे हविर्धाने साद्यते तस्मादेषो ऽर्धभाक् प्राणानामर्धभाजा उत्तरे हिरण्ये ऽधि सादयेदायुष्कामस्यामृतं वै हिरण्यमायुर्ध्रुवो ऽमृत एवास्यायुर्दधात्युपोप्ते ऽन्ये ग्रहाः साद्यन्ते ऽनुपोप्ते ध्रुवस्तस्मादस्थान्वे[5] पशवः प्रतितिष्ठन्ति मांसेन पुरुषः प्राणा वा उपरवा यदेत उपोप्ते ग्रहाः साद्यन्ते स्वे वा एतद्योनौ साद्यन्ते पूर्वार्धे वा इमे मुखस्य प्राणा एतत्खलु वै हविर्धानस्य पूर्वार्धं यद्दक्षिणं हविर्धानं तस्माद्दक्षिणे हविर्धाने प्राणा वा एत उत्तरे ग्रहा आयुर्ध्रुवो नव वै प्राणा आयुर्दशमं तस्मादेष दशमो गृह्यते दशमं ह्यायू राजपुत्रो ध्रुवं गोपायति सर्वासां वा एतत्प्रजानामायुर्गोपायति तस्माद्राजपुत्रो वीर्यवत्तमो यं ह्यभिचरेत् ॥ इदमहममुष्यामुष्यायणस्यायुः प्रवर्तयामि ॥ इति ध्रुवं प्रवर्तयेदायुरेवास्य प्रवर्तयति यत्प्रवर्तयेत्सर्वासां प्रजानामायुः प्रवर्तयेऽन्धुक्[6] प्रजा ऋच्छेद्वर्तिर्यजमानं गृह्णीयात्क्षोधुको ऽध्वर्युः स्यात्तद्यज्ञ्म एवं ॥ ध्रुवं त्वा ध्रुवक्षितिममुमास्या-

1) So Bb u. H, in Ben ह्यन्तो ohne Accent 2) Mit diesen Worten fängt M wieder an 3) Von hier in H u. Bb Lücke bis zum folgenden वा 4) So Ben u. M; in H u. Bb सर्वाभ्य एवं, B सर्वाभ्या एव 5) So Ben, (cf. TS 6, 5, 2), in M °स्थान्वे, desgl. B, ohne Accent; in Bb अस्थान्वे, in H अस्थान्वे 6) So M; die andern Mss प्रवर्तयेदायु

नाच्च्यावयामि ॥ इत्यास्थानादेवैनं च्यावयति प्रमायुको भवति ध्रुवं वै प्रच्यवमानं विश्वा भूतान्नु प्रच्यवन्ते प्र यजमान आस्थानाच्च्यवते तदभिमृश्यो दिवि दिव्यान्दृंहान्तरिक्षे अन्तरिक्ष्यान्पृथिव्यां[1] पार्थिवानिति यथास्थाम[2] वा एतत्प्रजा दृंहति स्व आयतने यजमानमायुषा[3] वा एष वीर्येण व्यृध्यते यस्य ध्रुवः स्कन्दत्यायुर्वै ध्रुवस्तदभिमृश्यः ॥ आयुर्धा असि ध्रुवायुर्मे धेहि ॥ इत्यायुरेवास्मिन्दधाति वरो दक्षिणा वरेणैव वरं स्पृणोत्यात्मा हि वरः पुत्रसेनस्य ह वै भैमसेने ध्रुव उपददास[4] तं मृशानः स्थैरवसं चातैनैभ्यो लोकेभ्य आप्याययांचकार ॥ स्वाहा दिवं आप्यायस्व ॥ इति स तृतीयं बभूव ॥ स्वाहान्तरिक्षादाप्यायस्व ॥ इति स द्विभागं बभूव ॥ स्वाहा पृथिव्या आप्यायस्व ॥ इति स पुपूरे तदेतेनैवैभ्यो लोकेभ्यो ध्रुव आप्याययितव्यो द्वादशे स्तोत्रेऽवनयति ॥ द्वादश मासाः संवत्सरः संवत्सरो यज्ञो यज्ञः प्रजापतिः प्राजापत्यः पुरुषो यावानेव पुरुषस्तस्मिन्नायुर्दधाति यत्सूयमाने[5] ऽवनयेद्गर्भाः प्रमादुकाः स्युर्यच्छस्यमाने युवानः प्रमीयेरन्यच्छस्त्रे बहिः प्राणान्दध्यात्संकृच्छस्तायां मध्यतो ऽवनीयो मध्यतो वा एतत्प्रजानामायुर्दधाति ॥ स्वयंभूरसि श्रेष्ठो रश्मिः प्रियो देवानां संसदनीय ॥ तं त्वा सुभव देवा अभिसंविशन्तु ॥ आयुर्धा असि ध्रुवायुर्मे धेहि ॥ इत्यायुरेवास्मिन्दधाति ॥ वर्चोधा असि ध्रुव वर्चो मे धेहि ॥ इति वर्च एवास्मिन्दधाति ॥ इषो ऽसि त्विषो[6] ऽसि नृम्णो ऽसि व्रतो ऽसि दक्षो ऽसि तस्य

---

1) In Ben u M °रिक्षं तरिक्ष्यान् (in M das अ des Adj aber zuerst geschrieben und erst dann als del bezeichnet), cf 1 3 15 2) So Ben u M, in H u Bb यथास्थामं°, B यथास्थांन 3) So Ben u M, die andern Mss °मायुषो 4) So M, in B °द्धास, H u Bb °द्धाम, Ben? 5) M सूयमाने 6) Ben क्षिप्रो

त इयस्य नेर्यस्य नृम्णस्य व्रतस्य दक्षस्य भक्षीय[1] स्वस्य चारणस्य च शूद्रस्य चार्यस्य च यथा त्वꣳ सूर्यासि विश्वदर्शत एवमहꣳ विश्वदर्शतो भूयासम् ॥ इति विश्वदर्शतो ह भवत्यसौ वा आदित्यः स्वयंभूः श्रेष्ठो रश्मिर्यथैष स्वयमभवदेवꣳ स्वयं भवति य एवꣳ वेद ॥ ६ ॥

Vgl 1, 3, 15 — TS 6, 5, 2 (dhruvah); Kāth. 28, 1; Kap S. 44, 1.

अथैत ऋतुग्रहाः संवत्सरस्य वा एते विधृत्यै गृह्यन्ते द्वादश मासाः संवत्सरस्तस्माद्द्वादश ऋतुग्रहा मधुश्च माधवश्च वासन्तिका ऋतू असन्ना हूयन्तो ऽसन्ना ३हीम ऋतवो नान्योऽन्यमभिप्रपद्यते[2] यदन्योऽन्यमभिप्रपद्यत[3] ऋता ऋतुरभीयादेष[4] यदन्योऽन्यः[5] प्रपद्यते तस्मादिदमृता ऋतुरनुनिहिताः परिप्लवन्त उभयतोमुखमृतुपात्रमुभयतोमुखा ३हीम ऋतवो न वै तद्विद्म यत ऋतूनां मुखꣳ सह प्रथमं गृह्णाति सहोत्तमꣳ सह युज्येते[6] सह विमुच्येते[7] चतुर्दश वा एतत्कुरुतो ऽति वा एतद्रेचयतो ऽस्ति मासस्त्रयोदशस्तमेवैतेनाप्त्वावरुन्द्ध ऋतुभ्यो वै प्रजाः प्रजायन्ते यत्षड्ऋतुना चतुर्ऋतुभिर्ऋतुभ्यो वावासा एतच्चतुष्पदः पशून्प्रजनयतो ऽथ यच्चतुर्ऋतुभिर्द्विर्ऋतुन ऋतुभ्यो वावासा एतद्द्विपदः पशून्प्रजनयतो यद्द्विर्ऋतुना[8] द्वौ ३हीमा ऋतू अथ यद्ध ऋतुपात्रे द्वौ द्वौ ३हीम ऋतवो नानुयजति वैश्वानरो वषट्कारो यदनुयजेद्वैश्वानरमृतुष्वन्ववसृजेदन्धो वा इदमासीद्व्यावृत्तमहरासीन्न रात्रिरासीत्तद्देवा ऋतुग्रहैर्व्यावर्तयन्यदृतुग्रहा गृह्यन्ते ऽहोरात्रयोर्व्यावृत्त्यै

1) Bb भक्षीय 2) So Ben, H u Bb प्रपद्यते; desgl B, ohne Accent; M प्रपद्येते 3) Die Mss schwanken, H u B प्रपद्यत, desgl B, ohne Accent; Ben प्रपद्यते; M प्रपद्येत 4) Ben ऋतुर° 5) So Ben u M, desgl B, ohne Accent, in H u Bb यदद्न्योन्यः 6) So Ben u M, die andern Mss युज्यते 7) So Ben u M, die andern Mss मुच्यते 8) In den Mss द्वि° ohne Accent

संवत्सरो वै स्वर्गो लोकस्तस्य वा एत आक्रमा यदृतुग्रहा यदृतुग्रहा[1] गृह्यन्ते स्वर्गस्य लोकस्याक्रान्त्यै ॥ ७ ॥

Vgl. 1, 3, 16 — TS 6, 5, 3 (ṛtugrahāh), Kāth. 28, 2; Kap S 44, 2

आदित्या वा इत उत्तमाः स्वर्गं लोकमायंस्ते वा इतः प्रतिसंहिताः पुरस्ताद्देवान्यन्त्संवत्सरो वै स्वर्गो लोकः संवत्सरमेतौ कल्पायतुं शायेते यदध्वर्यू यदैन्द्राग्नमृतुपात्रेण गृह्णाति संवत्सरं वा एतदन्वारभते स्वर्गाय लोकायायो ज्योतिरुपरिष्टाद्दधाति स्वर्गस्य लोकस्य समष्ट्या असौ वा आदित्यः शुक्रः पुरुषो वैश्वदेवो यच्छुक्रपात्रेण वैश्वदेवं गृह्णाति तस्मात्पुरुष एवामुं प्रत्यङ् सर्वे ऽन्ये न्यञ्चः पशवो देवाश्च वा असुराश्चास्पर्धन्त ते देवाः प्रातःसवने वैश्वदेवे यज्ञं संस्थाप्यमपश्यंस्तं प्रातःसवने समस्थापयन्यद्वैश्वदेवः प्रातःसवने गृह्यते प्रातःसवने वा एतद्वैश्वदेवे यज्ञं संस्थापयति तेन संस्थितेनारिष्टेन भूतेन प्रचरन्ति देवा वै सर्वे प्रातःसवनमभ्यायछन्नोत्तराभ्यां सवनाभ्यामतिष्ठन्त यद्वैश्वदेवः प्रातःसवने हूयते प्रातःसवने वा एतद्वैश्वदेवे देवतास्तर्पयन्ति तास्तृप्ता उत्तरे सवने अभिसृज्यमाना यन्ति वज्रो वै मरुत्वतीया वज्र एव प्रथमो ऽपगूर्तिर्द्वितीयः स्तृतिरुत्तमो[2] वज्रो वै धनुर्धनुरेव प्रथमः प्रतिहितिर्द्वितीयो विसृष्टस्तृतीयश्चक्रियो वा एते यज्ञस्य यन्मरुत्वतीया अंसो मध्यमः पयसी[3] अभितो मरुद्भिर्वै वी३र्येणेन्द्रो वृत्रमहँश्चार्तं मरुद्भ्यो ऽशक्नोद्धी३यें कर्तुं यन्मरुत्वतीयो ग्रहो गृह्यते मरुत्वतीयं शस्यते तेन माध्यंदिनं सवनं वीर्यवत्कथं

1) In Ben nur ein Mal यदृतुग्रहा 2) So Ben u. M, Bb स्तृतीयस्तमो; desgl. B, ohne Accent, H स्तृतीयस्तमो 3) Ben पयसो oder पयसि

संवनान्यृतुमन्ति[1] वेद्धेति पृच्छेदृतुग्रहैः प्रातःसवनमृतुमन्मरुत्वतीयैर्माध्यंदिनं सवनं सावित्रेण तृतीयसवनं मरुत्वतीययोः सवनयोर्दक्षिणा दीयन्ते स्वं वा एतद्यज्ञो दक्षिणा दीयन्ते परिधयो वा एते यज्ञस्य यन्मरुत्वतीयास्तस्मान्मरुत्वतीयान्दक्षिणा[2] नातिदीयन्ते यदतिदद्याद्यथा बहिष्परिधि स्कन्नमेवं स्याद्यदि कामयेत विडोजीयसी स्यादबलीयः क्षत्रमिति यस्या मरुत्वतीयः पूर्वो ऽर्धर्चस्तां[3] पुरोरुचं कुर्याद्विशं वा एतदोजीयसीमकरबलीयः क्षत्रं यदि कामयेत क्षत्रमोजीयः स्यादबलीयसी विडिति यस्या ऐन्द्रः पूर्वो ऽर्धर्चस्तां[3] पुरोरुचं कुर्यात्क्षत्रं वा एतदोजीयो ऽकरबलीयसीं विशं जामि वा एतद्यज्ञे क्रियते यन्मरुत्वतीयो ग्रहो गृह्यते मरुत्वतीयं शस्यते पशवो वै मरुतो ऽजामि पशवस्तेन तदजाम्यृतुपात्रमालभ्य प्रतिगृह्णात्यृतवो वै मरुतः संवत्सरं ऋतवा आयुः संवत्सर आयुषि वा एतदध्वर्युः श्रयते वृत्रं वा एष हन्ति यो मरुत्वतीयान्ग्रहान्गृह्णीते माहेन्द्रे सर्वे कामाः सर्वान्वा एतत्कामानाप्नोति सर्वान्व्यश्नोतीन्द्रो वै वृत्रमहन्त्सो ऽन्यान्देवानत्यमन्यत स महेन्द्रो ऽभवत्स एतमुद्धारमुदहरत वृत्रं हत्वा तदुद्धार एवास्यैष भाग एवं तस्माद्राजा संग्रामं जित्वोदाजमुदजते शुक्रपात्रेण माहेन्द्रं गृह्णाति वदन्ति ग्रावाणो वदन्त्यौलूखला मन्यन्त्याशिरमिन्द्रे वा एतदग्रा[5] आगते घोषमकुर्वतोभो यजमान एवं तेजो दधति[6] ॥ ८ ॥

Vgl 1, 3 17—25 — TS 6, 5, 4 (aindrâgnah) u 5 (marutvatiyâ mâhendraçca); Kâṭh 28, 2 u 3; Kap S 44, 2 u 3

1) M °मति (n. Bl) 2) So M, ohne Accent (n Bl); die andern Mss मरुत्वतीयां 3) Ben ता ohne Accent, M schreibt तान्, H u Bb तात्, desgl B, ohne Accent 4) Bb तमुद्धारं 5) So Ben, die andern Mss एतमंग्रा 6) So Ben u. M; die andern Mss दधाति

एतद्वा एषाभ्यनूक्ता ॥

अष्टौ पुत्रासो अदितेर्ये जातास्तन्वस्परि ।
देवाँ उप प्रैत्सप्तभिः परा मार्ताण्डमास्यत् ॥

इत्येष वाव स उपाᳲशुसवनो यो वा तस्य वा एष सोमपीथो यदादित्यमेवैतयन्ति॥ विवस्वन्नादित्यैष ते सोमपीथः ॥ इति सोमपीथेनैवैनᳲ समर्धयति व्यानो वा उपाᳲशुसवनः प्रजा आदित्यो व्यानᳲ वा एतत्प्रजासु दधाति पशवो वा आदित्यो यदभ्रा मध्यतः श्रीणाति मध्यतो वा एतत्पशूनां पयो दधात्यथ यन्नभ्रातऽङ्कयं तस्मादामा सती पक्वं दुहे यदि कामयेत वर्षेत्पर्जन्या इति ॥ या दिव्या वृष्टिस्तया त्वा श्रीणामि ॥ इति दभ्रोपरिष्टादादित्यᳲ श्रीणीयात्पशवो वा आदित्यः पशुभ्य एऽपो ऽमुतो वर्षति पशूनेव वृष्ट्याभिजिघर्ति यदि कामयेत गर्भाः श्रीव्येयुरित्युद्गृह्यादित्यमवेक्षेत गर्भा ह श्रेवुका भवन्ति शुक्रवतीवै पूर्वे सवने अशक्रं तृतीयᳲ सवनᳲ यद्विदेवत्यानाᳲ सᳲस्रवानवनयत्याग्रायणमभिप्रस्कन्दयति तेन तृतीयसवनᳲ शुक्रवद्देवा असुरान्हत्वा मृत्योर्विभयुस्तेनाधिषिणो न्यञ्चनेषिण एता देवता भूयिष्ठाः प्राविशन्यद्विदेवऽत्याᳲस्तस्माद्विदेवत्येभ्य आदित्यो निगृह्यते वृहतीभ्यां गृह्णाति पशवो वै वृहतीः प्रजा आदित्य एतावांल्लोको यावदुद्यतᳲ यत्संप्रसारयित्वा गृह्णाति लोकᳲ वा एतदन्नाद्यं यजमानो भ्रातृव्यस्य वृङ्क्ते ऽभ्यो इमा एव प्रजा अन्नाद्यायावरुन्द्धे यद्यस्य भ्रातृव्यो यजेत बहिर्वेदि तिष्ठेत्तथा हैनं नावरुन्द्धे पशवो वा आदिऽत्यो ऽग्नी रुऽद्रो

1) So M, H, Bb; in Ben °मोख्यत्, cf aber RV 10, 72, 8 2) H u Bb °थ्येनैवं° 3) cf भृतातङ्क्य TS 6, 5, 6 4 4) Ben °णाति 5) H u Bb वृष्या°; cf über die verschiedene Betonung dieses Wortes oben 2 4, 7 u 8. 2, 11, 5 6) So Ben u M, die andern Mss श्रेयुका 7) M (u Bl) °वतो वै 8) Ben °धिषी 9) Ben प्राविशन्

ऽपैरितास्त३न्वो यद्धिष्ण्यया यत्संप्रसारयित्वा[1] गृह्णाति रुद्रो वा एतत्पशूनन्तर्दधात्यपिधायोप निष्क्रामति[2] पशूनां गोपीथायादित्यो वै द्विदेवत्यानामनुयाजस्तस्मात्तान्नानुयजति[3] द्विदेव३त्या वा आदित्यस्य प्रयाजास्तस्मात्तान्नानुयजति[4] पशवो वा आदि३त्यो ऽसौ रुद्रो ब्राह्मण उपद्रष्टा यदीक्षमाणो जुहुयात्प्रधीयमानानामेषामुपद्रष्टा[5] स्यादन्यत्रेक्षमाणेन[6] होत३व्यमनुपद्रष्टैषां[7] भवति ॥ ९ ॥

Vgl 1, 3, 26 — TS 6, 5, 6 (âdityagrahah), Kâth 28, 6

॥ इति खिलकाण्डे षष्ठः प्रपाठकः ॥

---

गायत्रो वै देवानां सविता गायत्र्यां एष लोके सोमो गृह्यते यदाग्रायणस्तस्मादाग्रायणात्सावित्रो निर्गृह्यते ऽसौ ऽद् आ तृतीयात्सवनात्परिश्रयेत्क्रियमाणस्य[8] क्रियमाणस्य प्रसवायान्तरिक्षं वा अन्तर्या३मो ऽन्तरिक्षमिमाः प्रजा यदन्तर्यामपात्रेण सावित्रं गृह्णाति सविता वा एतत्प्रजाः प्रसुवति प्रजननायासन्नो हूयते ऽसन्ना३हीमाः प्रजा नैलयन्ति नानुयजति यदनुयजेत्सृष्टिं प्रजानां वि-

1) So Ben u M, H u. Bb संप्रसर्पयित्वा, B समर्पयित्वा 2) So Ben u M; die andern Mss निष्क्रामयति 3) Ben •मनुपयाजेस, Bb तस्मात्तंत्रानु 4) Ben तां नानु•; Bb तंचानु oder तन्नानु, H तन्नानु; M (u Bl) u. B तन्नानु• 5) H u. Bb •मेषाम• 6) In Bb स्याद्• ohne Accent. 7) So Ben; desgl. M. ohne Accent (u. Bl); in H u Bb मनूपद्रष्टै•, desgl B ohne Accent 8) So das Verbum in H u Bb betont; in Ben परिश्रयेत्, in M u Bl. ohne Accent.

छिन्द्याद्यथो समानपात्रौ ह्येतौ सोमौ गृह्येते तस्मान्नानुयजन्ति देवा वै तृतीयसवनमुद्यमं नाशक्नुवन्प्रातःसवने तर्हि सवितासीत्ते देवास्तृतीयसवनमभिपर्यायँस्तेन तृतीयसवनमुदयछन्त यत्सावित्रस्तृतीयसवने गृह्यते सवितृप्रसूता वा एतत्तृतीयं सवनमुद्यछन्ते सावित्रस्य संस्रवे वैश्वदेवमभिगृह्णाति वैश्वदेवीरिमाः प्रजाः सवितृप्रसूताः खलु वै प्रजाः प्रजायन्ते[1] मनो वै सविता वैश्वदेवीरिमाः प्रजाः सर्वासु वा एतत्प्रजासु मनो दधात्याशीर्मेतः सवनस्य गृह्णाति वैश्वदेवत्वाय सुशर्मासि सुप्रतिष्ठान इति यत्स्वित्सोमः सोमे प्रतितिष्ठति बृहदुक्षे[2] नम इति यद्बृहदिति तेन देवेभ्यो यन्नम इति तेन पितृभ्य उक्थभाजो वै पितरो ऽस्तोमभाज उक्थायैव[3] गृह्यते न स्तोत्राय यत्र गृह्यते तन्न्यस्यते स्व आयतने ॥ १ ॥

Vgl 1, 3, 27 u 28 — TS 6, 5, 7 (sâvitrah, vâiçvadevah), Kâṭh 28, 7; Kap S 44, 7

घृतस्य यजत्येष वै प्रथमो धिष्ण्यानां यदाहवनीयस्तं वा एतदेव व्याघारयत्याग्नावैष्णव्या व्याघारयति पराङ् वा एतर्हि यज्ञो ऽग्निः सर्वा देवता विष्णुर्यज्ञो देवताश्चैव यज्ञं चालभ्य घ्नन्ति वा एतत्सोमं यदभिषुण्वन्ति यत्सौम्यः सोमं वा एतत्संभावयन्ति सोममाप्याययन्त्येवमधिषुवो एतत्सोमं यदभ्यसुपुवुरनुस्तरणी[4] वा एषा सोमस्य यत्सौम्यः पितॄणामनुस्तरणी[5] तस्मात्पितृमत्या यजति दक्षिणा तिष्ठञ्जुहोति दक्षिणा हि पितॄणामुपसदा[6] वा एते ऽनुयाजा आग्नावैष्णव्या घृतस्य यजति[7] सौम्या सोमस्य या एवाद उप-

---

1) H u Bb प्रजायन्ते 2) H बृहदुचे, Bb बृहदुचे 3) H u Bb ॰थैव 4) M (u Bl) ॰सुषवुर॰ 5) So M (u Bl) ohne Accent, die andern Mss पितृणां॰, s übrigens auch TS 6, 6, 7, 1 6) H u Bb ॰मुपसदा॰ 7) In Bb यजति ohne Accent

सत्सु देवता अयाक्षीत्ता एतदंसुंच वा एष भूताय क्रियते यद्वा एतस्य व्यार्धि[1] यत्मामायि तदस्यामु लोक गछत्यथ पूत एवोञ्शिष्यते पवित्रं वै सौम्यो यजमानमेवैतेन पुनाति सामदेवऽत्यो वै सोमः सोमस्य खलु वै सौम्य साम्नि वा एतद्ध्रियते ॥ सचा तं एतद्यदु त इह[2] ॥ इति परिपश्यति यो ऽगतासु स परिपश्यति यो गतासुर्न स परिपश्यति यदि न परिपश्येदथ वदेत् ॥

यन्मे मनो यमं गतं यद्वा मे अपरागतम् ।
राज्ञा सोमेन तद्वयमस्मासु धारयामसि ॥

हृदिस्पृक् क्रतुस्पृग्वर्चोधा[3] असि वर्चो मे धेहि ॥ इत्याशिषमेवाशास्ते ॥ २ ॥

Vgl TS 6 6 7 (saumyaca ughṛtayaganubandhyah) Kap S 45 9

अथैते ऽतिग्राह्या[4] देवा वै सोममगृह्णतांथ वा एतानिन्द्रो ऽगृह्णीत सो ऽवेदं वा अहमिमानृते ब्रह्मण सविष्यामीति स ब्रह्मोपाधावत्तांब्रह्मणासमोब्रह्म वै गायत्री तंसाज्ञायत्रीभिर्गृह्यन्ते यदेवादं परमन्नाद्यमनवरुद्ध तस्यैते ऽवरुद्ध्यै गृह्यन्ते यै वा अमी वैराजस्य स्तोभा अतिरिक्तास्तैरेते[5] सामन्वन्त सर्वे वा एत ऐन्द्रा य ऐन्द्र ऐन्द्र ऽसो ऽसा आदित्य इन्द्र समानमग्निश्चासौ चादित्यो विराजो वै तेज आग्नेय शक्वरीणामैन्द्रो रेवतीनां सौर्यो यत्र पृष्ठानि युञ्ज्युस्तदेताञ्जुहुयात्सांम्ना[6] सतेजस्त्वाय सं वा एतद्यज्ञ पश्चा-

1) So Ben u M d e andern Mss व्यार्ध्यै 2) Bb यदुत्तरहा 3) So M nur ohne Accent (n Bl) d e andern Mss w e es sche nt हृदिस्पृक ऋतुस्पृ॰ 4) So corr girt die Mss ॰याह्या vgl aber we ter unten 5) Ben अति॰ M (n Bl) अतिरक्तास् 6) H u Bb जुहुयात्सांम्ना Be जुहुयात्साम्ना M u Bl ol ne Accen

त्स्तोत्रेण च शस्त्रेण चाधीयते यदतिग्राह्याः[1] प्रत्युत्तब्ध्यै चक्रियौ वा एते यज्ञस्य यत्पृष्ठान्युपस्तम्भनमतिग्राह्यास्तस्मात्प्रातःसवने गृह्याः प्रत्युत्तब्ध्यै यदाग्नेयस्तेजस्तेनावरुन्द्धे यदैन्द्र इन्द्रियं तेन यत्सौर्यो रुचं तेन त्रिवृद्वावासा एतत्समृद्धं ब्रह्मवर्चसं दधाति तेजो वा अग्निरिन्द्रियमिन्द्रो ब्रह्मवर्चसमसा आदित्यस्तेजसा च वावासा एतद्ब्रह्मवर्चसेन चोभयत इन्द्रियं परिगृह्णाति ॥ अग्नेष्ट्वा ब्रह्मणश्च तेजसा जुहोमि तेजोदां तेजो मा मां हासीन्माहं तेजो हासिषं स्वाहेन्द्रस्य च त्वा क्षत्रस्य चौजसा जुहोम्योजोदामोजो मा मां हासीन्माहमोजो हासिषं स्वाहा सूर्यस्य च त्वौषधीनां च वर्चसा जुहोमि वर्चोदां वर्चो मा मां हासीन्माहं वर्चो हासिषं स्वाहाग्न आयुःकारायुष्मांस्त्वं[4] तेजस्वान्देवेष्वेध्यायुष्मन्तं मां तेजस्वन्तं मनुष्येषु कुर्विन्द्रौजस्कारौजस्वांस्त्वं[5] सहस्वान्देवेष्वेध्योजस्वन्तं मां सहस्वन्तं मनुष्येषु कुरु सूर्य भ्राजस्कार भ्राजस्वांस्त्वं[6] वर्चस्वान्देवेष्वेधि भ्राजस्वन्तं मां वर्चस्वन्तं मनुष्येषु कुरु ॥ एते होमा भक्षंकाराश्च भवन्त्येतेषां वै वीर्येण बभ्रुविश्ववयसा[7] इमांल्लोकानर्वाचश्च पराचश्च प्राजानीतां[8] स ह वा[9] अस्मा इमे लोका अर्वाञ्चश्च पराञ्चश्च भान्ति[10] य एवं वेद सुप्रज्ञाना वा[11] इत इत्थं लोका अमुतस्त्वा अर्वाञ्चो दुःप्रज्ञाना[12] एष ह त्वेवामुतो ऽर्वाच इमांल्लोकान्प्रजानाति यस्यैते[13] हूयन्ते ॥ ३ ॥

Vgl 1, 3 31—33 — TS 6 6, 8 (atigrâhyah), Kap S 46, 2 u 3

---

1) So Ben, in H u Bb °दतिग्राह्या 2) Bb प्रप्रत्युत्तब्ध्यै 3) Bb चक्रे, H रुचौ) 4) M °करो°, die Mss schreiben र्स statt स्त्वं wie ich corrigirt habe, cf das Folgende 5) So Ben, die andern Mss सं° 6) So Ben, die andern Mss तं° 7) Ben °भयसा 8) So Ben u M, in H u Bb प्रज°, desgl B, ohne Accent 9) Bb त्वा 10) So Ben u M, dagegen H u Bb भाति ohne Accent 11) H u Bb त्वो 12) H u Bb schieben hier noch ein वा ein, desgl B, ohne Accent 13) Bb तस्यैते

उपांशुपात्रेण पात्नीवतं गृह्णाति प्राणो वा उपांशुः प्राणेन वा एतत्प्रयन्ति प्राणेनोद्यन्त्यथो प्राणानां प्रतिसंख्यात्या अथो यत्प्रथमं पात्रं युज्यते तदुत्तमं विमुच्यते प्राणानां गोपीथाय होता वा अद्य प्रातरुपांशुमयजद्यदेतं होता वषट्कुर्याद्यत्पुरो ऽकस्तं पश्चात्परिहरेत्प्रमायुकः स्यात्तस्मादेतमग्नीद्वषट्करोति पुरो ३ह्यग्नीत्प्राणो[1] वा उपांशुः प्राणादधि प्रजाः प्रजायन्ते यदुपांशुपात्रेण पात्नीवतं गृह्णाति प्रजननायासन्नो हूयते ऽसन्ना हि प्रजाः प्रजायन्ते नानुयजति यदनुयजेत्प्रजननमपिहन्यादथो समानपात्रौ ३ह्येतौ सौमौ गृह्येते तस्मान्नानुयजति मिथुनं वै घृतं च सोमश्च यत्पात्नीवतं घृतेन श्रीणाति[2] मिथुनत्वाय बृहस्पतिसुतस्य त इति ब्रह्म वै बृहस्पतिर्ब्रह्मणो वै योनेः प्रजापतिः प्रजा असृजत ब्रह्मणो वा एतद्योनेर्यजमानः प्रजायत इन्द्र[3] इन्द्रियावत इतीन्द्रियं हि गर्भो ऽग्ना३इ[4] पत्नीवा३निति[5] मिथुनं वा अग्नीच्च पत्नीश्च सजूस्त्वष्ट्रा सोमं पिबेति त्वष्टा हि रूपाणि विकरोति घृतं वै देवा वज्रं कृत्वा सोममघ्नन्नभि खलु वा एतं[6] धारयन्ति यत्पात्नीवतं घृतेन श्रीणातीन्द्रियेण वा एतत्पत्नी व्यृधयति तस्मान्निरिन्द्रिया स्त्री पुमानिन्द्रियवांस्तस्मात्पुमांसः[7] सभां यन्ति न स्त्रियो यदितगन्त्सोमाच्छ्रीणीयुर्न पात्नीवतं स्त्रियः सभामीयुर्न पुमांसा इन्द्रो वै वृषभमहंस्तस्य यन्मूर्धा-

1) Die ३ fehlt in den Mss und ist von mir ergänzt 2) In H u Bb werden hier die letzten Sätze, von यदनुयजेत्प्रजननमपिहन्यादथो u s w bis hierher (श्रीणाति) wörtlich wiederholt 3) So M, die andern Mss इन्द्र, s aber auch 1, 3, 29 4) Die ३ als Zeichen der Plutirung fehlt in den Mss und ist von mir hinzuergänzt, cf 1, 3, 29 5) Die ३ als Zeichen der Plutirung fehlt in den Mss, cf 1, 3, 29, H u Bb पत्नीवानिति, Ben पत्नीवानीति, M पत्नीवानिति 6) So Ben u M, die andern Mss एतां 7) So im Anschluss an M पुमानिन्द्रीयवांस्तस्मात्पुमांसः, die andern Mss पुमान्निरिन्द्रियवांस्तस्मात्पुमांसः

नमुदरुजत्स द्रोणकलशो ऽभवत्ततो यः सोमः समस्रवत्स हारियोजनस्तस्मादेतं द्रोणकलशेन जुहोति योनिर्ह्यस्यैष इन्द्रो वृत्रं हत्वा तस्य यत्क्लोम्नो हृदयात्सोमं समसिञ्चत्स हारियोजनो ऽभवत्स इन्द्रो ऽमन्यत यदिममसुर्ये[5] सोमं होष्यामि तदन्वसुरा आभविष्यन्ति यन्न होष्यामि तदन्वेभविष्यन्तीति तं संस्थिते प्रहृतेषु परिधिष्वजुहोद्यत्संस्थिते प्रहृतेषु परिधिषु जुहोति तत्स्विदुभयमकर्जुहोत्यह[6] संस्थिते जुहोत्यतिरिक्तो वा एष ऋत्विजां य उन्नेता तस्मादेतं न वृणते न वषट्करोत्यत्येष सोमो ऽरेचि स वा उन्नेतारमेवाभ्यतिरिच्यते ऽध्वर्युर्वै पूर्वान्त्सोमाञ्जुहोति[7] यदेतमध्वर्युर्जुहुयादाहुतीः संसृजेत्संमर्दं कुर्यात्तस्मादेतमुन्नेता जुहोति प्रजापतिर्वा एतममन्यत सोमं होष्यं स्तमग्निरब्रवीन्न मयि त्वमेतमसुर्ये[8] सोमं होष्यस्यमृतमद्वितीयं[9] द्वितीयमस्त्विति यद्धानाभिः श्रीणाति मृतत्वायाथो द्वितीयत्वायैषैता धाना यत्र वा असौ देवेभ्यः कामदुघाः काममदुह्र तदेता अपिदुदुह्रे तत्पुष्टिमेवैताभिरवरुन्द्धे प्रजापतिर्वा आप्यायमानो यदेप्सो ऽतिरिच्यते तस्मादयमनतिरिक्तो ऽपरिमित इमाः प्रजा अभिप्रवत ऋक्सामे वा इन्द्रस्य हरी तयोः परिधय आधानं निराधानाय खलु वा अश्वाय घासमपिदधाति[10] यत्संस्थिते प्रहृतेषु परिधिष्वजुहोद्यत्संस्थिते[11] प्रहृतेषु परिधिषु जुहोति निराधानाभ्यामेवाभ्यां घासमपिदधाति पशवो वै धाना यत्संखादेत्पशून्हिंस्याद्यन्न

1) Ben u M यै 2) So Ben, die andern Mss हार्योजनस्, diese Form auch Kap S 44, 9, dagegen Kath 28, 9 हारियोजन 3) M यै, Bb य 4) So Ben; die andern Mss हार्योजनो, s übrigens 1, 3, 20, Kâth 28, 9 हारियोजनः 5) So Ben, die andern Mss °सूर्ये° 6) So Ben u M; die andern Mss जुहोत्याह 7) M पूर्वांत्स° 8) So Ben, die andern Mss. °सूर्ये° 9) Bb होष्यस्य° 10) Ben °दधति 11) In den Mss ist das Verbum ohne Accent

संसादिदयताः[1] स्युः संहश्य[2] रय्यै त्वा पोषाय वैत्युपवपति[3] तत्स्विदुभयमकः पशूनां यत्यै भुञ्जन्त एनं पशवा उपतिष्ठन्ते ॥ ४ ॥

Vgl 1, 3, 29 u 30 — TS 6, 5, 8 (pâtnîvato grahah) u 9 (hâriyojanah); Kâth 28, 8 u 9, Kap. S 44, 8 u 9; 46, 4

यज्ञेन वै देवाः स्वर्गं लोकमाय॰स्ते ऽमन्यन्तानेन वै नो ऽन्ये लोकमन्वारोक्ष्यन्तीति ते छन्दा॰स्यपश्य॰स्तानि व्यत्यषजन्स्वर्गस्य लोकस्याननुख्यात्यै[4] यच्छन्दा॰सि व्यतिषजति लोकं॰ वा एतच्छन्दा॰सि यजमानो भ्रातृव्यस्य मोहयति स्वर्गस्य लोकस्याननुख्यात्यै[5] देवेषु वा अन्यानि छन्दा॰स्यासन्नसुरेष्वन्यानि कनीया॰सि देवेष्वासञ्ज्याया॰स्यसुरेषु ते देवाः कनीयोभिश्छन्दोभिर्ज्याया॰सि छन्दा॰स्यसुराणामवृञ्जत यत्कनीयोभिश्छन्दोभिर्ज्याया॰सि छन्दा॰सि विश॰सति लोकं॰ वा एतच्छन्दा॰सि यजमानो भ्रातृव्यस्य वृङ्क्ते लोकमेनमछन्दस्कमकरनुष्टुभं॰ सर्वाणि छन्दा॰स्यभिस॰श॰सति वाग्वा अनुष्टुब्वानुष्टुभः पुरुषस्तस्मात्पुरुषः सर्वा वाचो वदति पशवो वै छन्दा॰सि वागनुष्टुब्वानुष्टुभः पुरुषो यत्सर्वाणि छन्दा॰सि स॰शस्यानुष्टुभमुत्तमां॰ श॰सति तस्मात्पुरुष उपरिष्टाद्वाचः पशूनत्ति सर्वाणि छन्दा॰सि स॰श॰सति[6] प्रजापतिर्वै छन्दा॰सि प्रजापतिमेवाप्नोति षडक्षराणि स्तोत्रादतिरिच्यन्ते षड्वा ऋतव ऋतुष्वेव प्रतितिष्ठति ततश्चत्वारि शस्त्रं पुनरुपावर्तन्ते[7] चतुष्पदस्तेन पशूनवरुन्द्धे ऽथ द्वे ए-

1) So M, die andern Mss °दयत्ता 2) M सदंखं 3) Ben °वसति, in H u Bb वैत्यपचयति 4) So corrigirt, die Mss schwanken, M °स्यानुकख्यात्यै; Ben u H स्यानुच्यात्यै, desgl B, ohne Accent, Bb °स्यानुख्यात्यै 5) Die Mss schwanken; M °स्याननुकख्यात्यै, H °स्याननुच्यात्यै, desgl B, ohne Accent, Ben °स्यानुख्यात्यै; Bb °स्यानुख्यात्यै 6) H सं॰श॰° 7) So M, H Bb, die andern Mss °वर्तते

वातिरिच्येते[1] द्वे विराजमति सत्यं चानृतं च विराजमेवाप्नोति ॥ ५ ॥

Vgl TS 6, 6, 11, 5 u 6 (shodaçigrahah)

प्रजापतिर्वै देवेभ्यो यज्ञान्व्यकल्पयत्ते ऽमन्यन्तात्मानमन्तरगामिति तेषां वा इन्द्रियाणि वीर्याणि पुनः समवृहत्स षोडश्यभवद्ध्य वै तर्हीन्द्रो[2] देवानामासीदवमतमः[3] शिथिरतमस्तस्मै वा एतं षोडशिनं[4] प्रायच्छत्तेनेन्द्रो ऽभवत्ततो देवा अभवन्परासुरास्तद्य एवं विद्वानेतं षोडशिनं[5] गृह्णीते भवत्यात्मना परास्य भ्रातृव्यो भवति प्रजापतिर्वै देवेभ्यस्तनूर्व्यकल्पयत्तासां यां हरिवत्यासीत्तामात्मन्नधिष्यत[6] प्रेणां यद्धरिवती पुरोरुग्ग्रहस्य भवति यैवास्य हरिवती प्रिया तनूस्तामाप्नोति[7] न षोडशी नाम यज्ञो ऽस्तीत्याहुरथ कस्मात्षोडशीति यत्स्तोत्रेण च शस्त्रेण च संपद्यते तस्मात्षोडशी यज्ञेन वै देवाः स्वर्गं लोकमायन्तेषां[8] न प्राभवत्तस्मिन्वा एतं षोडशिनं[9] प्रत्यग्रह्णंस्तेनामुं लोकं व्याप्नुवंस्तदमुष्य वाव लोकस्य व्याप्त्यै षोडशी गृह्यते ऽमुष्य लोकस्य समष्ट्या अग्निष्टोमे राजन्यस्य गृह्णीयाद्दशान्त एनं वज्रो भूत्वा इन्द्धे ऽतिरात्रे ब्राह्मणस्य वज्रो वै षोडशीश्वरो ऽशान्तो यजमानं हिंसितो रात्रिरेव वज्रं शमयति प्रातःसवने गृह्यस्तेजो वै प्रातःसवनं तेजस[10] एवं वज्रं निर्मिमीते माध्यंदिने सवने गृह्य ओजो वै माध्यंदिनं सवनमोजस एवं वज्रं निर्मिमीते तृ-

---

1) M °च्यते 2) So M, in Ben तर्हीन्द्रो, Bb तर्ह इंद्रो, H तं है इद्रो, B ते होंद्रो 3) Ben u M °मततम 4) Ben °शीन 5) Ben °शीन 6) Die Mss schwanken, H u Bb °मात्मनधि°पत, desgl B ohne Accent, M °मातमभिघ्यत, Ben °मात्मन्य-घ्°यत् (erg °यति geschrieben dann corrigirt) 7) So Ben u M, in H u Bb ता-मेवाप्नोति, desgl B ohne Accent 8) M °माय°न्त्से 9) Ben °शीन 10) Bb तेज

